# NYĀYOKTI-KOŚA

## (A DICTIONARY OF NYĀYAS (SAYINGS) IN SANSKRIT ŚĀSTRAS)

**CHHABINATH MISHRA**
*Head of the Department of Sanskrit,*
*Ranchi University, Ranchi.*

1978

AJANTA PUBLICATIONS (INDIA)

# पुरोवाक्

कोशोऽयं न शब्दकोशो न वाक्यकोशो न वा साहित्यशास्त्रादिकोशः। किन्त्वयं लोकवेदनृपशास्त्राचारनयादिभिरनुमोदित ऐहिके पारलौकिके च जीवनेऽर्थवत्ताया ऐश्वर्यस्य चानुसन्धानार्थं विधेयकार्यसाधनप्रकारदर्शकः समेषां सदा सहायकः सूक्तिकोशो न्यायकोशश्च। असौ विशिष्टोक्तिमूलको लोकजीवन-यापन-साधन-संचय-शीलानां विविधोहापोहनिमग्नानां व्यस्तानां च कृते प्रदीप-कल्पो मार्गद्योतकः।

प्रकारनिर्देशनतत्पराणि वचनानीमनि न्यायादिशब्दाभिहितानि अपरिमितानि सन्ति सुरक्षितानि विभिन्नेषु शास्त्रेषु भाषासु लोकमुखेषु च। किन्त्वत्र तान्येव संकलितानि यान्यपरिहार्यरूपेण पुरुषार्थसाधनपराणि लोकजीवन-सम्बद्धानि ज्ञातव्यानि चासन्।

सूक्तं वेदेषु प्रसिद्धम्। सूक्तयोऽपि आदिमकालतः सर्वासु लोकभाषासु प्रचलिताः। तत्रोभयोर्नास्ति काचन भेदकरेखा। सूक्तयो लोकजीवनस्य समृद्ध्यर्थं लोकयात्रानिर्वाहार्थं च साधनभूता विद्यन्ते। जानपदजनानां विदुषां चाधरेषु सहजोत्कर्षेण विराजमाना लोकवार्त्ता लोकविद्यारूपेण विविधशास्त्रेषु विवेचिता प्रचारिता चास्ति। प्राचीनकालत एव विविधलोकभाषानिबद्धगीतेष्वपि सूक्तयः उपलभ्यन्ते। आचार्यहजारीप्रसादद्विवेदीनां मते ग्रामगीतानां महत्त्वं काव्य-सौन्दर्यपर्यन्तमेव नास्ति। एषामिदमप्येकं महत्कार्यं विद्यते यदेभिः एकस्या विशालसभ्यताया उद्घाटनं भवति या इदानीं यावद् विस्मृतिपारावारे निमग्ना आहोस्विद् असंगता प्रतीयते। ग्रामगीतानि आर्यागमनात् पूर्वस्या अस्या सभ्यताया वेदाः श्रुतयश्च विद्यन्ते। वेदा आरम्भिकयुगे श्रुतय उच्यन्ते स्म। वेदा अपि महदार्यजातेः गीतान्यासन्, ग्रामगीतानीव श्रावं श्रावं हृद्गताः क्रियन्ते स्म। सौभाग्यवशाद् वेदाः कालान्तरे श्रुतिरूपतामुत्तीर्य लिपिरूपतां प्राप्तवन्तः। परन्तु ग्रामगीतानि सम्प्रत्यपि श्रुतय एव विद्यन्ते। यथा वेदैः आर्यसभ्यताया ज्ञानं जायते तथैव ग्रामगीतैः आर्यपूर्वसभ्यताया ज्ञानमुत्पद्यते। इष्टकप्रस्तरानुरागिणो विद्वांसो यदि धृष्टतां नावगच्छेयुस्तदा तारस्वरेण वक्तुं

शक्यते यद् ग्रामगीतानां महत्त्वं मोहनजोदाड़ोतोऽप्यधिकमस्ति । मोहन-जोदाड़ोसदृशा भग्नस्तूपाः ग्रामगीतानां भाष्यस्य कार्यं सम्पादयितुं समर्था इति ।

वैदिकसाहित्ये पुरुषसूक्तादयो मन्त्ररूपेण प्रसिद्धाः । अतः सूक्तशब्देन सूक्तादयो गृह्यन्ते । अनया दृष्टचा सूक्तेषु लोकोक्तीनां न्यायरूपस्य प्रकारप्रदर्श-कस्य उक्तिसमूहस्य च समावेशो नास्ति समुचितः । किन्तु यदि सूक्तेषु पुरुष-सूक्तादीनामेव ग्रहणं भवति तदा सूक्तिषु विधिनिषेधपरकप्रकारविधायक-न्यायानां समाहारः सुकर एव प्रतीयते । परस्परसम्भाषणं स्वगतं वा भवतु तत्सर्वमुक्तिषु समाविष्टमस्ति । व्यवहारदृष्टचा व्यापकरूपेण लोकानुभवसिद्धैः जनैः निदानावसरे प्रयुक्ताः सूक्तयो लोकोक्तयो जाताः । ताश्च परम्परया काल-क्रमेण च देशविशेषस्यैव विभिन्नासु भाषासु केवलं न प्रचलिता अपितु देशा-न्तरभाषास्वपि भवन्ति ।

लोकवार्त्तायां लोकोक्तीनां महत्त्वं सर्वाधिकं भवति । लोकोक्तयः सूत्राणां कार्यं सम्पादयन्ति । लोकोक्तिः आकारदृष्टचा अल्पीयसी भवति, किन्तु अस्यां निहितः विचारोऽनुभवसिद्धो विरोधोपशामकः कार्यसाधकश्च । लोकोक्तय आकारतः संक्षिप्ताः साररूपाश्च नीतयः सन्ति । लोकोक्तिसाहित्यं संसारस्य नीतिसाहित्यमस्ति । साहित्येनानेन ज्ञातुं शक्यतेऽस्माभिः यत् प्राचीनकालतः कस्यचित् देशवासिनो विचारधारा कुत्र प्रसृता । भारतवर्षेऽस्मिन् लोकोक्ति-परम्परा सुप्राचीनाऽस्ति । अत्रत्यसर्वाधिकप्राचीनग्रन्थवेदोपनिषदादिषु लोको-क्तयः सूक्तयो वोपलभ्यन्ते । लौकिकसंस्कृते तु सूक्तीनां विपुलराशिर्विद्यते । भासकालिदासादीनां साहित्येषु निसर्गानुभूतसूक्तीनां संकल्पना जीवनसत्य-मुद्घाटयतीति नाविदितं प्रेक्षावताम् ।

शास्त्रीयग्रन्थेषु व्याकरणमीमांसादिषु च सूक्तिमूलकं कथनं न्याय-पदवाच्यमिति दृश्यते । इमे न्यायाः नानाविधेषु शास्त्रीयनिबन्धग्रन्थेषु अर्थ-निर्णयार्थं प्रमाणत्वेनोपन्यस्ताः । न्यायस्यार्थो भवति वाचो युक्तिस्तर्को वा यया येन वा अर्थसंगतिरन्विष्यते वैचारिकनिष्कर्षस्य प्रामाण्यमवधार्यते । शेखरादौ परिभाषारूपाः सूक्तयो लोकोक्तयो वा न्यायशब्देन सम्बोधिताः । शास्त्रीय-न्यायवत् लौकिका अपि न्यायाः विविधशास्त्रीयग्रन्थेषु अधिकरणनिर्णयार्थमु-पन्यस्ताः । ते चानेके विद्यन्ते । अत एव न्यायपदस्यापि स्वरूपविमर्शोऽत्रावश्यकः तद् यथा मीमांसाकोशे—तत्र न्यायो नाम परार्थानुमानात्मको वाक्यसमुदायः । स च द्व्यवयवो वा बौद्धवत् त्र्यवयवो वा मीमांसकवत् पञ्चावयवो वा तार्किक-वत् । प्राड्विवाकस्य निर्णयपत्रमपि न्याय एव । इयांस्तु विशेषः, यत् न्याये शरीरलाघवं सूत्रात्मकत्वं च, निर्णय-पत्रे तु शरीरगौरवं भाष्यात्मकत्वं चेति ।

परन्तु न्यायः निर्णयः प्रतिज्ञादिपञ्चकम् इति पर्यायः । रीतिः प्रकारः पद्धतिः इत्ययमपि न्यायपदार्थः ।

तथाहि 'ताः प्रग्राहं शंसति यथा वृषाकपिं वार्षाकपिं हि, वृषाकपेस्त-न्न्यायमेति' इति ऐतरेयकं ब्राह्मणम् (३०।६।५) । अस्यार्थः—ताः नाराशंसी-संज्ञकान् मन्त्रान् प्रग्राहं पादशः प्रगृह्य प्रगृह्य शंसति ब्राह्मणाच्छंसी । यथा वृषा-कपिं नाम सूक्तं पादशो विगृह्य शंसति तथा । हि यस्मात् कारणाद् इदं शंसनं वार्षाकपिसम्बद्धं कर्त्तव्यम् । तत् तस्मात् वृषाकपेः नाम सूक्तस्य न्यायं प्रकारं विगृह्य शंसनरूपम् एति प्राप्नोति इति । अत्र सायणाचार्यैः न्याय-शब्दस्य प्रकार इत्यर्थः कृतः ।

किं च 'स होवाच शुनःशेपः (अजीगर्तं पितरं) 'यः सकृत् पापकं कुर्यात् कुर्यादेनत् ततोऽपरम् । नापागः शौद्रान्न्यायादसंधेयं त्वया कृतम् ॥' इति (ऐ० ब्रा० ३३।५।४) अत्र सायणः—शौद्रात् न्यायात् नीचजातिसम्बन्धितः क्रूरादा-चरणात् न अपागाः अपगतो न भवसि इति । तथा च न्यायः आचरणं रीतिः पद्धतिः इत्यर्थः ।

'वर्णाश्रमांश्च न्यायतोऽभिरक्षेत्' (गौध० ११।९) इत्यत्र न्यायात् इति लोक-शास्त्राविरुद्धेन मार्गेण इति व्याख्यातं मस्करिभाष्ये । 'न्यायाधिगमे तर्कोऽभ्यु-पायः' (२५) इत्यत्र 'अधिगमे अवधारणे तर्कः अनुमानम्' इति मस्करिभाष्यम्, तेन प्रतिज्ञादिपञ्चावयवं परार्थानुमानं न्यायपदार्थः इति व्यक्तम् ।

'आध्यात्मिकान् योगाननुतिष्ठेत् न्यायसंहितान्' इति आपस्तम्बीयधर्म-सूत्रस्थं (१।२२।१) न्यायसंहितान् इति पदम् 'उपपत्तिसमन्वितान्' इति शंकर-भगवत्पूज्यपादा व्याचख्युः । तथा च न्यायः उपपत्तिः युक्तिः इत्यर्थः ।

अङ्गानां तु प्रधानैरव्यपदेशः इति न्यायवित्समयः । अपथ (२।८।११) इति सूत्रमङ्गानां कल्पसूत्राणां प्रधानवाचिभिः शब्दैः छन्दो वेदः ब्राह्मणम् इत्यादिभिः व्यपदेशो न न्याय्यः इति व्याख्याय न्यायवित् समयः न्यायविदां सिद्धान्तः इति च व्याख्याय शंकरभगवत्पूज्यपादैः 'ताविमौ पूर्वपक्षसिद्धान्तौ कल्पसूत्राधिकरणे स्पष्टं द्रष्टव्यौ' इत्युक्तम् । तेन अध्वरमीमांसाधिकरणेषु पूर्वपक्षसिद्धान्तसाधकानां बीजभूतानां च युक्तीनां न्यायशब्दवाच्यता ज्ञायते । यथा—'नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते' इति आकृत्यधिकरणस्य बीजम् । यथा वा 'अनन्यलभ्यः शब्दार्थः इति कर्त्रधिकरणस्य बीजम्' इत्यादि ।

किंच 'तस्याश्च सर्वगामित्वं तन्न्यायत्वात् प्रतीयते । नैकेषामेव सा ह्यस्ति, केषांचिद्वा न विद्यते ॥' इति वार्त्तिकम् (१।३।४।८ पृ० २१६) ।

तस्याः शब्दशक्तेरित्यर्थः । अत्र सुधा (पृ० २०७) तस्मिन् सर्वगामित्वे न्यायः युक्तिः यस्याः शक्तेरस्ति सा तन्न्याया, तद्भावः तन्न्यायत्वम् । कीदृशो न्याय इत्यपेक्षायामाह—'नैकेषामिति' इति । अत्र न्यायशब्दस्य युक्तिरित्यर्थः कण्ठत एवोक्तः सुधाकरेण । मीमांसासूत्रेषु च अनेकवारं न्यायशब्दः प्रयुक्तः । तत्र च सर्वत्र युक्तिः युक्तं योग्यम् इत्येवार्थः प्रायः प्रतीयते, यथा 'अन्यायश्चानेकशब्दत्वम् ।' इति सूत्रम् (१।३।८।२६)। अत्र भाष्यम्—न चैष न्यायः, यत् सदृशाः शब्दाः एकमर्थमभिनिविशमानाः सर्वे अविच्छिन्नपारंपर्या एवेति—इति लौकिकन्यायसंग्रहकारश्चाह 'सर्वे लौकिकदृष्टान्ता लौकिक्यः कथाश्च (योगवासिष्ठाद्युक्ताः दामव्यालकटाद्याः) न्यायत्वेन उदाहर्त्तुं शक्यन्ते' इति सर्वथाऽपि रीतिः पद्धतिः प्रकारः युक्तिः इत्यर्थमालम्ब्यैव अत्र कोशे शास्त्रीया लौकिकाश्च सर्वे न्यायाः संगृहीता इति ।

छविनाथ मिश्र

# न्यायोक्तिकोशः

**अकामस्य क्रिया काचित् दृश्यते नेह कर्हिचित् ।**
**यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ।** (मनुः २।४) इति न्यायः । अनेन पुंसः सकलकर्माचरण-कारणं सर्वानर्थबीजं काम एवेति बोधितमिति । योग्यत्वायोग्यत्व-विचारमन्तरेण वस्तु दृष्टं श्रुतं च कामयति पुमांसमिति कामः । वैषयिकी प्रबलेच्छा अत्र कामशब्देनोच्यते ।

**अकाले कृतमकृतं स्यात्** इति न्यायेन चतुर्धाकरणादूर्ध्वं विष्णोरावाहनस्य निरर्थकत्वात । वि० १०।१।१ वर्णकं ३ । अकाले अयोग्ये विपरीते वा काले कृतमपि कर्म निष्फलं भवति, इति तत् अकृतमिव स्यात् । यथा अकृते न फलं तथा कृतेऽपि न फलं तद्वत् ।

**अकृतव्यूहाः पाणिनीयाः** इति न्यायः । न कृतः विशिष्टः ऊहो यैस्ते अकृतव्यूहाः । पाणिनीया इति पदम् उपलक्षणमात्रम् । बुद्धिमन्तः ऊहापोह-कुशलाः पुरुषा निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीत्यर्थः । साहस्री. ३४०.

**अक्लृप्ताभावकस्य अभावकल्पनापेक्षया क्लृप्ताभावस्यैव तत्कल्पनम् उचितम्** इति न्यायः । साहस्री. ६२.

**अक्षरसाम्येन निब्रूयात्** इति न्यायः (निरुक्त. २।१) । 'अथ कस्मादुच्यते भगवान् महेश्वरः । यस्माद् भक्तान् ज्ञानेन भजति अनुगृह्णाति च (इति भगः) वाचं संसृजति विसृजति च (इति वान्), यः सर्वान् भावान् परित्यज्य आत्म-ज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते भगवान् महेश्वरः इति ।

**अक्षाभ्यञ्जनन्यायः** । पदकर्मन्यायः । पदन्यायः । ज्योतिष्टोमे सोमक्रयणी-नयनं क्रयप्रयुक्तमेव, न पदप्रयुक्तम् ।

**अगतिकगतिन्यायः** । साहस्री० ६८३ । यत्र अन्या गतिः उपायः नास्ति

तत्र असंमतमपि स्वीक्रियते । असंमतस्वीकरणम् अगतिकस्य पुरुषस्य गतिः । महता मार्गेण गच्छन् यदि कथंचित् रुद्धः स्यात् तदा पदपथेनापि गन्तुमीहते । पदपथ एव तस्य गतिः मार्गः ।

**अग्निशिखान्यायः** । यथा स्वभावतः अग्निशिखा ऊर्ध्वं गच्छति । माघकविनाऽप्युक्तम् 'प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः' इति (१।२) ।

**अग्निसंमार्गन्यायः** । २।१।४।६-१२. संकर्ष०

उच्छ्रयणादीनाम् अग्निसंमार्गन्यायेन उत्पन्नयूपसंस्कारकत्वम् । भाट्ट० ६।२।१२.

**अग्निहोत्रनामन्यायः** । (७।३।१।१-४) भा०

द्वादशाहे प्रथमस्याह्नः प्रायणीयं इति नाम तथा गवामयनेऽपि । तत्र अग्निहोत्रनामन्यायेन अतिदेशः इति चेत्, मैवम् । मासाग्निहोत्रन्याय एवायम् । ७।३।१।१-४.

**अग्निहोत्रन्यायः** । अग्निहोत्रादिकर्मणां निहितकालकर्तव्यत्वम् ।

**अग्निहोत्रशब्दन्यायः** । आतिथ्येष्टौ नवकपाले श्रुतो वैष्णवशब्दः राजसूयगते वैष्णवे त्रिकपाले अग्निहोत्रशब्दवत् नवकपालधर्मान् अतिदिशति इति पूर्वपक्षः । वि० ७।३।६ ।

**अग्निहोत्रहवणीन्यायः** । १०।२।२७।६४) भा०

संबन्धरूपाङ्गाभावेऽपि अग्निहोत्रहवणीन्यायेन प्रधानभूतकपालबाधानुपपत्तेः । अयमेव गुणलोपन्यायः ।

**अग्नीनां लौकिकवैदिकसर्वार्थत्वनिरासन्यायः** । द्वादशे वक्ष्यमाणः 'निर्देशाद्वा वैदिकानां स्यात्' (१२।२।१।३) इति । सु० ३।७ पृ० ४०.

**अग्नीषोमीयवाक्यन्यायेन** इहापि सौमारौद्रं चरु निर्वपेत् । इति प्रकृत्य 'परिश्रिते याजयेत्' इत्यत्र यजिवाच्यकर्मविधायित्वसिद्धिः । सु. पृ. ६३१.

**अग्न्यानयनन्यायः** । अग्निरानीयताम् इत्युक्ते काष्ठादिकमपि आनीयते ।

**अघन्यायः** । (ब्रसू. ४।१।६।१३) 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इत्ययमघन्यायः । अघं पापं तस्य ब्रह्मज्ञानेन नाशः । पुण्यस्यापि अश्लेषविनाशयोः अघन्यायो निर्दिष्टः । तदधिगमे ब्रह्मप्राप्तौ सत्याम् उत्तरस्य अघस्य अश्लेष लेशाभावः, पूर्वस्य चाघस्य विनाशो भवति, तद्व्यपदेशात् तयोः अश्लेषविनाशयोः श्रुत्या व्यपदेशात् इति न्यायसूत्रार्थः । के.

**अङ्गे फलश्रुतिरर्थवादः इति न्यायः** । (४।३।१।१) एवं च कृष्णजयन्त्याम् उपवासस्य पारार्थ्ये निर्ज्ञाते यः तद्वाक्ये फलोल्लेखः, स केवलः स्तावक एव पर्णतादिवत् 'अङ्गे० वादः' इति न्यायात् । समयमयूखः पृ० २६.

**अङ्गगुणविरोधन्यायः** । अङ्गगुणन्यायः । अङ्गगुणविरोधाधिकरणन्यायः ।

ज्योतिष्टोमे सुत्या पर्वणि कार्या, दीक्षा तु अपर्वणि ॥

**अङ्गप्रधानानाम् एकदेशकालकर्तृकत्वन्यायः** । (१२।१।१६।३२) यदा हि अश्वप्रतिग्रहवतः कर्मणः वारुणीष्टिः अङ्गमेवेत्यवधारितं, तदा अङ्ग-प्रधानाना० न्यायात् यः एवः क्रतोः कर्ता, तेनैव इयमपि कर्तव्या । यश्च क्रतोः कर्ता, सः अश्वस्य दाता । तस्मादसन्दिग्धमेव दातुरिष्ट्या भवितव्यम् । वा० ३.४।११।७१ पृ० ६६५.

**अङ्गाकर्षणन्यायः** । 'प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति' इति तस्य स्वरूपम् । यदा हि भावना अन्यतः प्राप्ता भवति, तदा तस्याः पिष्टपेषणवत् प्रति-हतशक्तिर्विधायकः ताम् अविदधानः, न तत्संगतार्थनिकविधिव्यापार-प्रसवहेतुत्वं प्रतिपद्यते । विशिष्टविधाने तु अर्थापत्त्या विध्यन्तराणि कल्प्यन्ते । वा० २।२।३।६ पृ० ४८०.

**अङ्गाधिक्यात् फलाधिक्यम् इति न्यायः** । स्पष्टार्थः । (यथा प्रभूतघास-चारणे गौः प्रभूतं दुग्धं ददाति, प्रभूतेषु वा काष्ठेषु अन्वाहितेषु अग्निर्भूयो वर्धते तद्वत्) कल्पतरुः, ३।३।४२ अपू.

**अङ्गावतारन्यायः** । (३।१।१।१८) 'उपांशु यजुर्वेदेन क्रियते' इति कल्पसूत्रम् (सत्या. १।१।२५)

**अङ्गारन्यायः** । यथा अङ्गारः उष्णस्तापयुक्तश्चेत् हस्तं दहति, उष्णेऽङ्गारे गृहीते हस्तो दग्धो भवति इत्यर्थः ।

**अङ्गीकृता ग्लानिर्न दोषाय इति न्यायः** ।

**अङ्गुलीदीपिकया ध्वान्तध्वंसविधिः इति न्यायः** ।

अङ्गुल्या वर्तिता दीपिका अङ्गुलीदीपिका । अनया ध्वान्तस्य अन्धकारस्य ध्वंसविधिः क्रियमाणः नो सफलतां प्राप्नोति । यत्र महाकर्मनिष्पत्तये स्वल्पम् अर्थात् तत्रासमर्थप्रायं कारणं प्रयुज्यते, तत्रायं संचरति इति । साहस्री. ८४४

**अङ्गुल्यग्रे करिणां शतम् इति न्यायः** । यत्र अश्रद्धेयतोपन्यासः विवक्ष्यते, तत्रायम् अवतरति इति साहस्री ८७८.

**अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत्** ।

**अचेतनेष्वपि चेतनवदुपचारो दृश्यते इति न्यायः** ।

**अजगरवृत्तिन्यायः** । अजगरो यथा एकदा भुक्त्वा बहून् वारान् भोजनं विनैव आस्ते । किंवा स्थूलशरीरत्वात् गमनादिव्यवहारं मन्दं मन्दं करोति तद्वत् साहस्री. ६५७.

**अजहत्स्वार्था वृत्तिः इति न्यायः** । यथा एवं हि दृश्यते लोके, भिक्षुकोऽयं द्वितीयां भिक्षां समासाद्य पूर्वां नो जहाति, संचयायैव प्रवर्तते । किंच, यत्र वाच्यार्थस्य अर्थान्वयः तत्र अजहत्स्वार्था वृत्तिर्भवति ।

**अजाकृपाणीयन्यायः** । अजाकृपाणपदाभ्यां तदागमनपतने लक्ष्येते । अजागमनमिव कृपाणपतनमिव अजाकृपाणं, ततः अजाकृपाणमिव अजाकृपाणीयमिति । एवमागच्छन्त्या अजायाः कृपाणपतनाद्यथा वधः, तत्सदृशं मरणमिति फलितोऽर्थः । साहस्री. ५६.

**अजागलस्तनन्यायः** । यथा अजायाः छाग्याः गले कण्ठे स्तनौ स्तनाकारौ मांसविकारौ निष्प्रयोजनौ स्तः तथा प्रकृतेऽपि ।

**अजातपुत्रनामोत्कीर्तनन्यायः** । भाविसंज्ञया निर्देशो विवक्षितोऽत्र । साहस्री. १६७.

**अज्झल्न्यायः** । अचः स्वराः । हलो व्यञ्जनानि । अयं श्लोकेन विवृतः । तथाहि—'एकाकिनोऽपि राजन्ते सारसत्त्वाः स्वरा इव । व्यञ्जनानीव निःसत्त्वाः परेषामनुगामिनः ॥' इति साहस्री. ६३४.

**अणुरपि विशेषोऽध्यवसायकरः इति न्यायः** । इदमित्थमेवेति विषयपरिच्छेदोऽध्यवसायः । अध्यवसानमध्यवसायः । साहस्री ११६.

**अण्डकुक्कुटीन्यायः** । अर्धजरतीयन्यायवत् अस्यार्थः । साहस्री. २१८.

**अतर्क्या कुट्टनीकूटरचना हि विधेरपि इति न्यायः** । परनारीं परपुंसा योजयित्री 'कुट्टनी' इति प्रसिद्धा । 'कुट्टनी संभली समे' इत्यमरः । तस्याः कूटरचना, कपटरचनेत्यर्थः । साहस्री. ६४७.

**अतस्मिन्स इत्येतद्भवति इति न्यायः** । अयं 'पुंयोगादाख्यायाम्' पा० ४।१।४८) इति सूत्रमहाभाष्येऽभिहितः ।

**अतिक्रान्तावेक्षणन्यायः** । सिंहावलोकनन्यायसमानार्थक एवायम् । भूतपूर्वस्य पुनर्विचार इति तदर्थः ।

**अतिदेशन्यायः** ।

श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात् ।

**अतीतमहिषीस्नेहन्यायः** । यथा कश्चिद्यतिः गार्हस्थ्यदशायां कस्यांचिन्महिष्यां स्नेहं कृत्वा पश्चात् संन्यासानन्तरं श्रवणे प्रवृत्तोऽपि तेनैव स्नेहजनितप्रतिबन्धेन तत्त्वं गुरुणोपदिष्टमपि न ज्ञातवानिति लोके गाथा प्रतीयते, तथाभूतोऽपि प्रतिबन्धो ज्ञानमवरुणद्धि । विस्तरस्तु वेदान्तग्रन्थेषु बोध्यः । साहस्री. ४५६.

**"अत्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् । इष्टस्यार्थस्य संप्राप्तौ को विद्वान् यत्नमाचरेत् ॥"** इति न्यायः ॥ अर्कं गृहाङ्गणकोणः । अत्रवे इतिपाठेऽपि स एवार्थः ।

**"अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः । दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥"** इति न्यायः । अयं यत्र निर्बलेनापि प्रबलसहायेन प्रबलो बाध्यते तत्र

प्रवर्तते। साहस्री. २३१.

**'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि' इति न्यायेन** (श्लेषा० १।१।२।६) बाधितस्यापि द्वारवाक्यार्थस्य बोधः शब्दशक्तिस्वाभाव्यात् उल्लसन् न दण्डवारितः। प्रमाणप्रकाशः पृ० ३६४.

**'अत्रैकवर्णिकेन निषादेन कृतमपि आधानम् आहवनीयसंस्काराधायकं न भवति, तस्य आधाने विशेषवचनाभावात्' इति न्यायः।** स्थपत्यधिकरणे प्रतिपादितः। (६।८।३।१०—२१) परिमलः ३।४।११।४१—४२ ब्रसू.

**'अथापि शास्त्रतन्त्रत्वं तथापि तदनेकता' इतिग्रहाधिकरण—(३।१।७) वार्त्तिकोक्तन्यायेन** सकृदुच्चरितस्यापि प्रत्ययस्य एकपदोपात्तानेकार्थविधिशक्तत्वम्। सु० पृ० ४१६.

**अदग्धदहनन्यायः।** यथा नहि वह्निर्दग्धं दहति किन्तु अदग्धमिति, तथा प्रकृतेऽपि। 'इको झल्' (पा० १।२।६) इति सूत्रमहाभाष्येऽप्ययमभिहितः।

**अदर्शनादृष्टन्यायः।** अदर्शनाभावात् अदृष्टम् अज्ञातं नास्ति इति गम्यते तद्वत्।

**अदोषतैव स गुणो विगुणे इति न्यायः।** अयं सुबोधिन्यां प्रथमस्कन्धत्रयोदशाध्यायसप्तत्रिंशे पद्ये द्रष्टव्य इति। साहस्री. ५६१.

**अधिकं तु प्रविष्टं न तद्धानिः इति न्यायः।** यत्राधिकप्रवेशेऽपि प्रकृतस्य न हानिस्तत्रायं प्रवर्तते इति। साहस्री. ५१३.

**अधिकं नैव दोषाय इति लौकिकन्यायेन** तृतीयसवने पश्वङ्गहोमः, न तु वपायां न्यूनत्वबुद्ध्या। ऐब्रासा. ७।१।६.

**अधिकारन्यायः** अत्र स्वर्गः प्रधानतः, कर्म गुणतः इति स्वर्गकाममधिकृत्य 'यजेत' इति वचनम्, इत्यधिकारलक्षणमिदं सिद्धं भवति, इत्युक्तम्। इदमेव स्वर्गकामाधिकरणम्। स्वर्गादिकामुकस्यैव काम्ये कर्मणि अधिकारः इति न्यायार्थः।

**अधिकारिणः प्रमितिजनको वेदः इति न्यायात्** सम्यक्पदार्थविज्ञानवत एव वाक्यार्थबोधे अधिकारः। उपदेशसाहस्री० पद्य. रामतीर्थ १।८।१६१.

**अध्यारोपापवादन्यायः।** विवेकिनां बुद्धिम् आत्मनि अवतारयितुं विशेषणविशेष्यादिप्रबन्धकल्पना यथाप्रतीतिसत्तामादाय क्रियते अध्यारोपापवादन्यायेन उपदेशसाहस्री पद्यं. रामतीर्थः १८।१६५.

**अध्याहारन्यायः।** 'अनुषङ्गाधिकरणम् इति बिन्दौ द्रष्टव्यः भा. २।१।१६ ४८.

**अध्याहारानुषङ्गन्याय** 'अनुषङ्गाधिकरणम्' इति बिन्दौ द्रष्टव्यः।

**अध्यूध्नीन्यायः।** अग्नीषोमीये पशौ अध्यूध्न्या होतुः कृत्स्नेडाभक्षस्य

निवृत्तिः ॥

**अध्वरकल्प न्यायः ।** (प्रथमः) औपदेशिकमुख्यक्रमापेक्षयाऽऽतिदेशिकपाठ-क्रमस्य बलवत्त्वम् ॥

**अध्वरकल्प न्यायः,** (द्वितीयः) । संघत्रये अङ्गानां भेदेनानुष्ठानम् ।

**'अनधीते महाभाष्ये व्यर्था स्यात् पदमञ्जरी । अधीतेऽपि महाभाष्ये व्यर्था स्यात् पदमञ्जरी ॥"** इति न्यायः । यथैव ईश्वरमनाराध्य आराध्य चान्यदेवम् अपवर्गेच्छा व्यर्था । आराध्य चान्यदेवमनाराध्य परमेश्वरं मुक्तीच्छा व्यर्था । (स्यात् इत्यत्र सा इति पाठः उभयत्र, पदमञ्जरी नाम काशिकायाः टीका ।) साहस्री. ७३.

**अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायः ।** (परिभाषेन्दु. ६२) 'अपरे तु शुक्रामन्थिनोः पात्रे' प्रयुनक्ति, इति सत्याषाढसूत्रं (८।१।२३), तत्र अव्यवहितस्य आश्विनस्य अपरः प्रदेशो ग्राह्यः 'अनन्तरस्य' इति न्यायात् इति ज्योत्स्ना ।

**'अनन्तरेण संबन्धः स्यात् परस्याप्यनन्तरः । तदारूढः पुनः पश्चात् तदानन्तर्यमश्नुते ।।'** (वा. २।१।१६।४८ पृ. ४५५) इत्यनुषङ्गाधिकरणन्यायेन अङ्गान्तरव्यवधायकत्वाभावात् । ('ततः पुनस्तदारूढः' इति वार्त्तिके तृतीय-चरणे पाठः) सु. पृ. १०६६.

**अनन्यलभ्यः शब्दार्थः इति कर्त्रधिकरणन्यायः ।** (३।४।४) बाल पृ० ६३.

**अनन्यलभ्यः शास्त्रार्थः इति न्यायः ।** शास्त्रस्वरूपमुक्तं स्कान्दे 'ऋग्यजुः सामाथर्वा च भारतं पाञ्चरात्रकम् । मूलरामायणं चैव शास्त्रमित्यभिधीयते । यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् । अतोऽन्यः शास्त्रविस्तारो नैव शास्त्रं कुवर्त्म तत् ।।' इति ।

**अनन्यलभ्यो वाच्यः, अन्यलभ्यो गम्यः इति न्यायस्य** सामान्यविषयत्वात् कर्ता अन्यलभ्योऽपि वाच्यः इति विशेषविषयेण आगमेन बाधोपपत्तिमाशङ्क्य सामान्यविषयस्यापि न्यायस्य, न्यायापेक्षत्वेन मन्थरात् पौरुषेयागमात् शीघ्रं प्रवृत्तिः । सु० पृ० १४१८.

**'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान्' इति न्यायः ।** अनन्योऽपि सन् आत्मा यथा अन्यशब्देनोच्यते, तथा एकः सन् बहुरूपवान् इत्युच्यते इत्यर्थः । न्यायामृताद्वैतसिद्धी भूमिका पृ. ४.

**अनपायश्च कालस्य लक्षणं हि पुरोडाशौ इति न्यायः** (१०।८।१६।६९) । अनपायश्च इति गुणसूत्रेण 'उपांशुयाजमन्तरा यजति' इत्यन्तरालोपलक्षण-पुरोडाशद्वयकार्यान्वयाभावात् 'नासोमयाजिनो ब्राह्मणस्याग्नीषोमीयः पुरोडाशो

विद्यते' इति असोमयाजिनो ब्राह्मणस्य एकपुरोडाशायामपि पौर्णमास्याम् उपांशुयाजोऽस्ति इति व्यवस्थापयिष्यते कु. ३।१।२६.

**'अनभ्यासो वा प्रयोगवचनैकत्वात्'** इति न्यायः। प्रयाजाद्यङ्गानाम् एकस्मिन् प्रयोगे अभ्यासो न कर्त्तव्यः, प्रयोगवचनैकत्वात् अङ्गानां प्रधानानां च प्रयोगवचनस्य एकत्वात् इति न्यायाक्षरार्थः।

**अनवयवे शास्त्रार्थसंप्रत्ययः** इति न्यायः। सिद्धं तु धर्मोपदेशनेऽनवयविविज्ञानात्, यथा लौकिकवैदिकेष्विति।

**अनवस्थान्यायः**। उपपाद्योपपादकयोरविश्रान्तिरिति मीमांसकाः। अनवस्थितपरम्परोपाधिना अनिष्टप्रसङ्गरूप इत्यन्ये। 'धातोः' (३।१।९१)

**अनागतावेक्षणन्यायः**। यथा अनागतं न आगतं भविष्यत् कार्यम् आदावेव अवेक्ष्यते विचार्यते तद्वत्। के.

**अनादाविह संसारे दुर्वारे मकरध्वजे। कुले च कामिनीमूले का जातिपरिकल्पना॥'** इति न्यायः। (संसारस्तावदनादिः अतिदीर्घकालिकः। मकरध्वजः कामः स्त्रीसमागमेच्छा दुर्वारा दुर्जया। कुलपरम्परा च सर्वथा कामिनीमूलैव। तेन संकर एव संभाव्यते, शुद्धजातिविशेषकल्पना तु व्यर्था इत्यर्थः)। सनातनप्रकाश. पृ. ३५५.

**अनादिन्यायः**। सत्यपि च स्त्र्यपराधे यदि मातुरेव क्षेत्रिणो वा पुत्रः स्यात्, ततस्तयोः प्रसिद्धजातित्वात् नैव दुर्ज्ञानता भवेत्, तयोरप्येवम्, एवं तत्पूर्वजयोरपि इति अनादिन्यायेन जातिरवधार्यतैव। वा० १।२।१।१३.

**अनादेशे प्रकृतिः प्रत्येतव्या** इति न्यायात् चित्रेष्टौ अनुवतानि हवींषि सौम्य सरस्वती-सिनीवाली-वर्जं सर्वे पुरोडाशाः। सत्याषाढश्रौतसूत्रं चन्द्रिका. २२।५।२५.

**अनारब्धे तु गोशब्दे गोशब्दत्वं कथं भवेत्** इति न्यायेन गवादिपदस्य अनेकक्रमिकवर्णसमुदायात्मकत्वेन यौगपद्यासंभवात् पदत्वादिजातिवदेव साधुत्वादिजातिरपि गवादिपदनिष्ठा निराकर्तव्या। कौ. १।३।८।२४ पृ. १०९

**अनार्यसंगमाद्वरं विरोधोऽपि समं महात्मभिः'** इति न्यायः। भारविः किरा० (१।८)। अनार्याणां खलजनानां मित्रत्वात् सकाशात् महात्मभिः सह विरोधोऽपि श्रेयस्करः इति शब्दार्थः। साहस्री. ६६२.

**अनित्यसंयोगपरिहारन्यायः**। व्याकरणज्ञानं तु पौरुषेयं ग्रन्थाधीनत्वात्, मन्त्रार्थवादगतानित्यसंयोगपरिहारन्यायेन अनादिवेदविषयत्वेन नावधार्यते। वा. १।३।८।२४ पृ० २५७.

**अनियमन्यायः**। (३।३।१८।३१ ब्र सू.) अनियमन्यायस्य प्रतीकव्यतिरिक्तेष्वपि उपासनेषु उपपत्तेः। शांभा. ४।१।६।१५.

**अनिर्दिष्टार्था: प्रत्यया: त्रिष्वपि कालेषु भवन्ति इति न्याय:।**

**'अनुकरणं हि शिष्टस्य साधु भवति इति न्याय:।** 'यथा लोके च एवमसौ ददाति, य एवमसौ यजते, एवमसावधीते इति तस्याऽनुकुर्वन् दद्याच्च यजेत चाधीयीत च सोऽभ्युदयेन युज्यते' इति 'ऋऌक्' सूत्रमहाभाष्ये सुविस्तर: इति। साहस्री. ६६७.

**अनुक्तमप्यूहति पण्डितो जन:, इति न्याय:।** विचक्षणो जन: अकथितमपि विषयमनुभवतीति विषये प्रचार:। उक्तं च 'उदीरितोऽर्थ: पशुनाऽपि गृह्यते हयाश्च नागाश्च वहन्ति चोदिता:। अनुक्तमप्यूहति पण्डितो जन: परेङ्गितज्ञानफला हि बुद्धय:॥' इति। साहस्री. ६४६.

**अनुपदिष्टं सत् कथं शक्यं विज्ञातुम्, असच्च कथं शक्यं प्रतिपत्तुम् इति न्याय:।**

**अनुवृत्तिन्याय:।** अनुवृत्ति: सेवा, अभ्यास इति यावत्। यत्राभ्यास-प्राबल्यविवक्षा तत्राऽयं प्रवर्तते।

**अनृतवदननिषेधैदमर्थ्यावधारणन्याय:।** अनृतवदनन्याय:। अनृतवदन-प्रतिषेधन्याय:। अनृतवदनवर्जनन्याय:। अनृतवदननिषेधो दर्शपूर्णमासगत:-क्रत्वर्थ:।

**अनेकदेहादानन्याय:।** केचित् पतिते पूर्वदेहे देहान्तरमाददते, केचित्, स्थिते एव तस्मिन् ऐश्वर्यवशात् अनेकदेहादानन्यायेन (देहान्तरमाददते)। शां० भा० ३।३।१६।३२. ब्रसू०।

**अनेकपितृकाणां तु पितृतो भागकल्पना (याज्ञ. स्मृ. २।१२०) इतिन्याय:** यदा अग्रे पुत्रा मृता:, पौत्रा एव च वर्तन्ते, यदा अग्रे पौत्रा एव स्वांशान् लभन्ते 'अनेक०' इत्यनेन न्यायेन। धर्मकोशे व्यवहारकाण्डे मदनपारिजात: पृ. ६६०. ६६२.

**'अनेकाश्रितत्वेऽपि योगस्य (द्वयाश्रयत्वेऽपि भवत्यन्यतराश्रयो व्यपदेश: इति न्याय:॥** दधिहोमसम्बन्धस्य द्वयाश्रितत्वेन द्रव्यमात्राश्रितत्वाभावात् द्रव्यसंबन्ध-(न्धि)त्वस्य असिद्धत्वमाशङ्क्य 'अनेका०' इत्यनेन न्यायेन एकाश्रितत्वा-विरोधसूचनार्थ: तच्छब्द:। सु. पृ. ७४२.

**अनोवासोन्याय:।** अनोवास:प्रभृतिशब्दानाम् आकृतिनिमित्तता।

**अन्तरङ्गबहिरङ्गयोश्च अन्तरङ्गं बलीय: इति न्याय:॥** तत् कस्य हेतो: ? अत्र हि पूर्व: प्रत्ययो भवेत्। ये धर्मा अपूर्वार्था:, ते साक्षात् अपूर्वेण असंबध्य-माना: तदङ्गेषु विज्ञायन्ते।

**अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते इति न्याय:।** (पृ. २००,५२ परि.) अत्र च 'प्रत्ययोत्तरपदयोश्च' इति सूत्रं ज्ञापकम्। त्वत्कृतम् इत्यादौ

लुगपेक्षया अन्तरङ्गत्वात् विभक्तिनिमित्तिकेन 'त्वमावेकवचने' इत्यनेन सिद्धे इदं व्यर्थं सत् तज्ज्ञापकम् ।

**अन्तरागर्भिणीन्यायः** । 'देशसंबद्धं' (८।१।६।२०) इतिसूत्रमारम्य तद्देशानां ९।१।६।२५) इति सूत्रपर्यन्तम् एकमधिकरणम् । भा०

**अन्तरेणापि निमित्तशब्दं निमित्तार्थो गम्यते इति न्यायः** ।। अयं न्यायः द्विर्वचनेऽचि (१।१।५६) इति सूत्रे महाभाष्ये अभिहितः ।

**अन्तर्दीपिकान्यायः** ।। अयं मुण्डकोपनिषदीयशाङ्करभाष्ये । तथाहि 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्' इति । नित्यं सदा नित्यं सत्येन, नित्यं तपसा, नित्यं सम्यग्ज्ञानेनेति सर्वत्र नित्यशब्दोऽन्तर्दीपिका-न्यायेनानुवक्तव्य इति । साहस्री. ६५६.

**अन्ताल्लोपो वृद्धिर्वा इति न्यायेन** अष्टाचत्वारिंशस्य आवृत्या त्रयोदशरात्रे छन्दोमानां चतुःसंख्या पूरणीया । तंसंसा. ७।३।३.

**अन्ते निवेशन्यायः** । उपहोमन्यायः इति बिन्दौ द्रष्टव्यम् । ५।२।६।१७ — २०.

**अन्ते मतिः सा गतिः इति न्यायः** । यथा—'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः ।।' इति श्री-भगवद्वाक्यानुकूलोऽयं न्यायः इति । साहस्री० १३६.

**अन्ते रण्डाविवाहश्चेदादावेव कुतो न सः इति न्यायः** । ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनं व्यर्थम् । संग्रहः ।

**अन्धस्येवान्धलग्नस्य विनिपातः पदेपदे इति न्यायः** । यथा अन्धानु-यायिनोऽन्धस्य प्रतिपदं विनिपातो भवति, तथा मूर्खानुयायिमूर्खस्य नाभीष्ट-सिद्धिः, किन्त्वनर्थप्राप्तिरेव भवतीति भावः । साहस्री. ३४१.

**अन्धगजन्यायः** । यत्र तत्त्वानभिज्ञमूर्खाणां परस्परकलहस्तत्रायमवतरति । अन्धैर्निर्धारितो गजोऽन्धगजस्तस्य न्याय इति मध्यमपदलोपगर्भः षष्ठी-तत्पुरुषः ।

**अन्धकवर्तकीयन्यायः** । अन्ध एव अन्धकः । स्वार्थे कः । नेत्रविहीन इत्यर्थः ।

**अन्धकूपपतनन्यायः** । अनेन पथा गन्तव्यमिति सत्पुरुषेणोपदिष्टस्तं पन्थानं मुञ्चन्नन्धो यथा कूपे पतति, एवं वेदाद्युपदिष्टमार्गं परित्यजन्नज्ञो नरकादिदुःखेषु पततीत्यस्य तत्र प्रवृत्तिरिति । साहस्री. ४९३.

**अन्धगोलाङ्गूलन्यायः** । कश्चित् किल दुष्टात्मा महारण्यमार्गे पतितमन्धं स्वबन्धुपुरे जिगमिषुमुवाच किमत्र त्वया दुःखितेन स्थीयत इति ।

**अन्धचटकन्यायः** । यथा ह्यकस्मादन्धस्य हस्ते पतितश्चटकोऽन्धेन

गृहीत इति लोके प्रसिद्धिमगात्तथा दैवाल्लब्धं स्वाभीष्टं स्वेष्टदेवत्वेनाभिमते-श्वरदत्तं मन्यन्ते इत्यर्थः। घुणाक्षरन्यायविषये एवास्य प्रवृत्तिरिति। साहस्री. ८३.

**अन्धदर्पणन्यायः**। अन्धस्य दर्पणे दर्शनं व्यर्थम्। साहस्री. ३०२.

**अन्धन्यायः**। इमामगृभ्णन् इति मन्त्रस्य अदृष्टार्थत्वे तु अन्धन्यायेन यत्रैव नीयते तत्रैव वर्तिष्यते। वा० पृ. १।२।४।३१-१ पृ० १४६.

**अन्धपङ्गुन्यायः**। यथा कश्चित् चक्षुष्मान् पुमान् पङ्गुः अन्यमन्धं नरमाश्रित्य प्रवर्तयति किं चित् फलमुद्दिश्य, तथा चेतनः पुरुषः स्वयमप्रवर्त-मानः प्रवृत्तिशक्तिमदचेतनं प्रधानं प्रवर्तयति इति सांख्याः।

**अन्धसंध्यान्यायः**॥ अन्धस्य संध्याकालज्ञानं नास्ति तद्वत्। प्रज्ञाहीनस्य प्रधानस्य अन्धसंध्यान्यायवत् कालज्ञानायोगात् न कदाचिदपि जगत्कारणत्वम् उपपद्यते। श्रीकर ∴२।२।३ ब्रसू०

**अन्यगेहस्थिताद्धूमान्न गेहान्तरमग्निमवैति न्यायः**। यत्र साधनीयोऽर्थः संदेहविषयीभूतो भवति स पक्षः।

**'अन्यतः प्राप्तान्यङ्गानि समीक्ष्य प्रयोगविधिर्विधत्ते'** इति न्यायेन प्रयोग-विधेः यथा प्राप्त्यैव अङ्गानां प्रधानप्रत्यासत्तिविधायकत्वात्। कु. ५।१।८।१५.

**'अन्यतः प्राप्ते कर्तृकर्मणोरवाच्यता'**। इति लौकिकन्यायानुसारी 'द्व्येकयोः इत्यादिसूत्रार्थो भवति। सू. पृ. १४।२६.

**अन्यत्र कृतार्थम् अन्यत्र प्रतिपाद्यते इत्येष हि न्यायः**॥ सोमलिप्तानां द्रव्याणाम् अवभृथे नयनं प्रतिपत्तिः इत्यादिविषये)। भा. ४।२।८।२२.

**अन्यत् साध्यमदृष्ट्वैव यागादीननुतिष्ठतः। धार्मिकत्वसमाख्यानं तद्योगा-दिति गम्यते**। (श्लोवा० चोदनासूत्रे १९२) इत्यनेन न्यायेन यागादिस्वरूपस्यैव धर्मत्वम् इत्यापन्नम्। सनातनधर्मप्रदीपे प्रामाण्यप्रकाशे पृ० ७१.

**अन्यथाकरणे चास्य बहुभ्यः स्यान्निवारणम् इति न्यायः**। आयुर्वेदे वैदिक-शान्तिकपौष्टिकप्रायश्चित्ततपोजपदानहोमाद्युपदेशपरो भागः अप्रमाणम् इति चेत् (बौद्धशङ्केयम्) न. तुल्ययोगक्षेमत्वात्।

**अन्यद् भुक्तमन्यद्वान्तमिति न्यायः**। यथा विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नातीत्यत्र विघ्नध्वंसं प्रति मङ्गलस्य कारणता अभिहिता सिद्धान्तिना।

**अन्यलभ्यत्वम्** 'एककपालानां वैश्वदेविकः प्रकृतिः (७।१।५ २३) इत्यधि-करणन्यायः। 'एतदधिकरणन्यायस्य अन्यलभ्यत्वस्य' भाट्ट ७।१।५.

**अन्यायश्चानेकशब्दत्वम् इतिन्याय**. । कुतः ? यस्याम् अभिधान-क्रियायां गोशब्दः करणं तस्यां सास्नादिमत् कर्म यस्यां चासौ कर्म तस्यां

गोशब्दः करणम् ।

**अन्यायश्चानेकार्थत्वम्** (इति न्यायः) । भा. पृ. ३०१, ४१०, ७४८, १३४०, १३६६, १५५०.

**अन्यार्थं प्रकृतमन्यार्थं भवतीति न्यायः** । तद्यथा शाल्यर्थं कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयते, उपस्पृश्यते च, शालयश्च भाव्यन्ते, तथा प्रकृतेऽपि ।। कुल्या अल्पा कृत्रिमा सरित् इत्यमरः ।

बहुगणवतुडति संख्या (पा० (१।१।२३) इति सूत्रमहाभाष्ये साहस्री० ४२६.

**अन्यार्थसंनिधानस्य आकाङ्क्षावशात् विशेषकत्वम्** इतिन्यायः । अपरिमिताधिकरणप्रतिपादितः (६।७।१०) । पराक्रमः पत्रं २७।२.

**अन्येन चाऽन्यस्य विधिर्भवतीति न्यायः** । तद्यथा देवदत्त-समाशं शरावैरोदनेन च यज्ञदत्तः प्रतिविधत्ते तथा संग्रामं हस्त्यश्वरथपदातिभिः इति । 'येन विधिस्तदन्तस्य' (पा० १।१।७२) इति सूत्रभाष्ये उक्तः । समाशो भोजनम् साहस्री ६०५.

**अन्योन्याश्रयन्यायः** । स्वग्रहसापेक्ष ग्रहसापेक्षग्राहकरूप इति तार्किकाः । परस्परज्ञानसापेक्ष ज्ञानाश्रयरूप इति स्मार्ताः ।

**अन्योपसर्जनम् अन्येन नान्वेति इति न्यायः** । एकस्य यत् उपसर्जनं विशेषणं, तत् अन्येन साकम् अन्वयं नानुभवति इत्यर्थः । के.

**अन्वयव्यतिरेकन्यायः** । यत्सत्त्वे यत्सत्त्वमन्वयः यदभावे यदभावो व्यतिरेकः अन्वयव्यतिरेकौ स्तोऽस्मिन् इति ।

**अपच्छेदन्यायः** । परप्राबल्यन्यायः । पूर्वदौर्बल्यन्यायः । पौर्वापर्यन्यायः । पौर्वापर्यबलीयस्त्वन्यायः । ज्योतिष्टोमे क्रमेणापच्छेदे उत्तरकालीनापच्छेदनिमित्तकं प्रायश्चित्तं कर्त्तव्यम् ।

**अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति** इति न्यायः । यथा 'महाजनो येन गतः स पन्थाः' इत्युक्तेर्विपरीतं पन्थानमित्यर्थः ।

**अपराह्णच्छायान्यायः** । यथा दिनपरार्धच्छाया प्रथमं लघ्वी पश्चान्महती, तथा सज्जनमैत्री । उक्तं च 'आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् । दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ।।' इति । साहस्री. ३३२.

**अपरिग्रहं च प्रधानगामि इति न्यायः** ।। (यस्मिन् मन्त्रादौ कस्य चिद्देवताविशेषस्य परिग्रहः स्वीकारः निर्देशो नास्ति तत् अपरिग्रहं, तच्च यत् प्रधानं तस्मिन् गच्छति तत्प्रतिपादकम् इत्यर्थः) । दुर्गाचार्यः निरुक्तम् ७।४ पृ० ६२६.

**'अपरिग्रहं च श्रेष्ठगामि' इति न्यायः** । यस्मिन्नपि पक्षे नराशंसो यज्ञः,

तस्मिन्नपि पक्षे यज्ञप्रभवत्वादस्य जगतो यज्ञस्य श्रैष्ठ्यम् । अपरि० गामि इति न्यायः । दुर्गाचार्यं निरुक्तम् ७।४ पृ० ६२७.

**अपवादे निषिद्धे उत्सर्गोऽपि न प्रवर्तते । इत्ययं न्यायः ।** 'नहि देवदत्तस्य हन्तरि हते देवदत्तस्य पुनरुन्मज्जनं भवति' इति न्यायेन समानार्थकः ।

**अपवादन्यायः ।** अधिष्ठाने भ्रान्त्या तदतिरेकेणाभावनिश्चयोऽपवादः । यथा— स्थाण्वादौ प्रतीतस्य पुरुषादेः स्थाण्वाद्यतिरेकेणाभावनिश्चय इति । साहस्री. ४१९.

**अपवादाभावादुत्सर्गस्थितिः इति न्यायः ॥** 'दृष्टसर्वनिषेधे तदेकदेशवस्तुधीरूपापवादाभावादुत्सर्गस्थितिः' इति न्यायात् पूर्वदृष्टस्य वस्तुत्वप्रसङ्गात् अनवधिकनिषेधायोगात् । न्यायनिर्णयः ३।२।६।२२ ब्रसू.

**अपसारिताग्निभूतलन्यायः ।** भूतलात् अपसारितेऽपि अग्नौ तत्र उष्णता उपलभ्यते तद्वत् । साहस्री २८७.

**अपितु वाक्यशेषः स्यात्** (अन्याय्यत्वाद् विकल्पस्य विधीनामेकदेशः स्यात् ।१०।८।१।४ ) **इत्यनेन न्यायेन** 'न केसरिणो ददाति' इत्ययं पर्युदासः । शा० ६।७।४.

**'अपिवा कर्तृसामान्यात् प्रमाणमनुमानं स्यात् ।'** (१।३।१।२) अयमेव **स्मृतिन्यायः ।**

**अपिवा प्रयोगसामर्थ्यान् मन्त्रोऽभिधानवाची स्यात्** ( इति द्वितीयमन्त्राधिकरणसूत्रन्यायेन (२।१।६।३१) सामर्थ्याधीनत्वात् श्रुतिकल्पनस्य, मुख्ये च निरपेक्षसामर्थ्याविगतेः, तस्यैव श्रुतेः प्रकल्पकत्वात् । सु० पृ० १०८४.

**अपिवा यजमानाः स्युऋत्विजामभिधानसंयोगात्** (तेषां स्यात् यजमानत्वम् । १०।६।१५।५२ **इति न्यायः** । सत्रे त एव वा यजमानाः ऋत्विजः, अन्ये वा भिन्नाः इति संशये, त एवेति न्याय्यम् ।

**अपिवा शेषभूतत्वात् तत्संस्कारः प्रतीयेत** । (१०।१।६।११) । स एव न्यायः इह (उत्तमप्रयाजे) यः स्थाण्वाहुतौ 'अपि वा शेष' इति । भा०

**अपिवा सर्वधर्मः स्यात् तन्न्यायत्वाद् विधानस्य** (१।३।८।१६) **इत्यनेन न्यायेन** वैदिके कर्मणि अनुमेयवेदस्य 'विहितं कर्म प्रक्रान्तं सत् नियमेन समापनीयम्' इत्येवंरूपस्य 'अपिवा सर्वधर्मः' इति न्यायेन गृहादिसाधारण्यात् तदपि समापनीयम् (पूर्वपक्षे) । सोम. ६।२।४ पृ० ४८४.

**अपेक्षितविधानादिरूपः न्यायः ।** नहि समाख्यया क्रमस्य बाधः संकोचो वा, तस्य याज्यादिकार्ये निवेशेऽपि अविरोधात् । अपितु अपेक्षितविधानादिरूपस्य न्यायस्यैव (समाख्याया बाधः संकोचो वा) स तु नियमः समाख्यातो दुर्बल एव

कौ. ३।२।७।२० पृ. २५६.

**अपेक्षितविधेः** (इयं पञ्चमी) **अनपेक्षितविधानदौर्बल्यन्यायः**। व्रीहिय-वाभ्यां वैतुष्यार्थम् अवघातोऽपेक्षितः न आज्यसानाय्याभ्याम्, इति अपेक्षित० न्यायेन अवघातस्य औषधद्रव्यमात्रशेषत्वं तेषामर्थाधिकरणे (३।१।४) दर्शितम्। पराक्रमः ४।१।१.

**अपेक्षितानपेक्षितविधानयोः अपेक्षितविधानं बलवत् इति न्यायः**। तस्मात् प्रथमापेक्षितकरणक्लृप्तिमेव अन्वयव्यतिरेकौ न्यायसहितौ कुर्वाते। कार्यस्य कारणापेक्षा हि प्रथममुत्पद्यते, न विरोधिसंसर्गाभावापेक्षा। इति विवरणम्। पृ० ६०। तत्रायं न्याय उक्तः। तत्त्वदीपने पृ० ६०.

**'अपोह्यमाने चाभावे भाव एवावशिष्यते' इति न्यायात्** अकरणनिवृत्तिः करणमेव नान्यत्। नाभावो भावमृच्छति। रत्न० ६।३।१।२ पृ० ७६।२.

**अप्रतिषिद्धमनुमतं भवति इत्यनेन न्यायेन** अनिराकृतोंऽशः अङ्गीकृतः स्यात्। सु. पृ० ७२.

**अप्राप्ते शास्त्रमर्थवत् इति न्यायः**। अन्यतः प्राप्ते तु शास्त्रम् अनर्थकं स्यात्।

**अबाधेन उपपत्तौ बाधो न न्याय्यः इति न्यायः**। अयं ज्योतिःशास्त्रे व्यवहृतः। तत्र हि ननु संस्कारप्रकरणगृहप्रवेश-प्रकरणादीनां पार्थक्योप-निबन्धात् पञ्चाङ्गदोषापवादकता कुतो नास्तीति चेदुच्यते। आदि० साहस्री ५८६

**अब्धिफेनादिन्यायः**। अयं न्यायो दृग्दृश्यद्वयविवेकाऽपरनामवाक्यसुधाकर-ग्रन्थे व्यवहृतः। तथाहि 'सृष्टिर्नाम ब्रह्मरूपे सच्चिदानन्दवस्तुनि। अब्धौ फेनादिवत् सर्वनामरूपप्रसारणम्।' इति।

**अब्भक्षन्यायः**। यथा अब्भक्षोऽयं द्विज इत्युक्तिः अब्भक्षस्यान्नादिभक्ष-केष्वपि सत्त्वादयं तदितरभक्षणनिषेधे पर्यवस्यतीति। साहस्री २००

**अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः इति न्यायः**। तद्यथा 'अभक्ष्यो ग्राम-कुक्कुटः, अभक्ष्यो ग्रामसूकरः' इत्युक्ते गम्यते 'एतदारण्यो भक्ष्य' इति पस्पशायाम्। (पस्पशा महाभाष्यस्य प्रथममाह्निकं प्रस्तावरूपम्)। साहस्री. ८२६.

**अभाण्डलाभ इति न्यायः**। यथा केनचिदापणिकेन स्वापेक्षितसाधनभूत-भाण्डद्रव्यस्याऽभावे तज्जन्या प्राप्तिरेषितव्या, एवं यत्राभीष्टसिद्धौ साधन-भूतस्यार्थस्य अभावेऽपि अभीष्टसिद्धिरिष्यते, तत्रायं न्यायोऽवतरतीति।

**'अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः' इति न्यायः**। भारविः (२।२०)। मानिनो जनाः अन्यतः पराभवभयात् हेतोः असून् स्व-प्राणानपि सुखं यथा तथा उज्झन्ति, धाम स्वतेजस्तु नोज्झन्ति इत्यर्थः।

साहस्री. ६६६

'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु।' इति न्यायः। साहस्री. ६०. अभिव्यक्तपदार्था ये इत्यनेन गौणलाक्षणिकव्यावृत्तिः।

अभीष्टस्त्रीवियोगार्त्या सविवेकोऽपि बाध्यते इति न्यायः॥ यथा—वासवदत्तादिविरहपीडया वत्सराजादयो दृष्टान्तभूताः। स्पष्टाभिप्रायोऽयमिति। साहस्री. ७३१.

अभेदोपचारलक्षणाहेतुतुल्यत्वन्यायः। यद्यपि अभेदोपचारलक्षणाहेतुः द्विविधोऽपि सामानाधिकरण्ये तुल्यः, तथापि गुणिशब्दस्य गुणशब्दानुरोधेन समानाधिकरण्यप्रयोगस्य अप्राचुर्यात् नैतत्सामानाधिकरण्यं गुणशब्दस्य गुणिशब्दानुरोधेन सामानाधिकरण्यवत् शीघ्रं प्रतिभाति।

अभेदका गुणा इति न्यायः। तद्यथा देवदत्तो मुण्डयति, शिख्यपि स्वामाख्यां न जहाति, तथा बालो युवा वृद्धो वत्सो दम्यो बलीवर्द इति। एवं प्रकृतेऽपीति। 'वृद्धिरादैच्' सूत्रभाष्ये। (गुणभेदेऽपि गुणी न भिद्यते इत्यर्थः)। साहस्री. ८३२.

अभ्यन्तराश्च समुदायेऽवयवा इति न्यायः। यथा वृक्षः प्रचलन् सहावयवैः प्रचलति, तथा प्रकृतेऽपि बोध्यम्। प्रत्याहाराह्निके महाभाष्ये इति। साहस्री ८२८.

अभ्यन्तरो हि समुदायेऽवयवः इति न्यायः॥ तद्यथा वृक्षः प्रचलन्सहावयवैः प्रचलतीतिएकाचो द्वे प्रथमस्य' (पा० ६।१।१) इति सूत्रमहाभाष्ये ऽभिहितम्।

अभ्यर्हितं पूर्वम् इति न्यायः॥ अल्पाच्तरं इति पाणिनिसूत्रे (२।२।३४) वार्त्तिकमिदम्। अभ्यर्हितं पूज्यं प्रधानं वा।

अभ्यर्हितं पूर्वं निपतति इति न्यायः। उत्पत्तिशिष्टगुणावरुद्धे तद्विरोधित्वगुणान्तरविध्यसंभवो वैश्वदेवाधिकरणे (१।४।११।१७२२) व्युत्पादयिष्यमाणः। अत्र हेत्वन्तरसमुच्चयार्थम् उक्तः।

अयस्कान्तन्यायः। अयमुदासीनत्वे कर्मप्रवर्तकत्वविवक्षायामवतरति। यथा कूटस्थोऽध्यक्षः अयस्कान्तकल्पः प्रवर्तकः सन् चराचरं जगदुत्पादयति, तथा प्रकृतेऽपि बोध्यमिति। साहस्री. ६१६.

अयस्कान्तसूचीन्यायः। निर्धर्मकस्य परमेश्वरस्य जगज्जन्मादिहेतुत्वाभावात् अयस्कान्तसूचीन्यायेन तत्र आरोपितप्रधानस्यैव तत्सत्तावशात् जगत्कारणत्वं सम्भवति। श्रीकर. १।१।१६ ब्रसू.

अयाचितमण्डनन्यायः। अजगरप्रवर्तनवत् याच्ञां विनैव लब्धं वस्तुविशेषमयाचितमित्युच्यते। मण्डनं भूषणम्।

**अरण्यचन्द्रिकान्यायः** । अरण्ये चन्द्रिका व्यर्था उपभोक्तुरभावात् । रमणाभावे यत्र रमणीशृङ्गाररचना, तत्रास्य संचारः । अत एव 'स्त्रीणां प्रियालोकफलो हि वेषः' इत्युक्तिः संगच्छते इति । साहस्री. ६५६.

**अरण्यरोदनन्यायः** । अरण्ये कृतं रोदनं यथा व्यर्थं भवति तद्वत् । साहस्री. ३०६.

**अरुणादिन्यायः** । अरुणाधिकरणम्, अरुणाधिकरणन्यायः अरुणान्यायः, अरुणाशब्दन्यायः, अरुणैकहायनीन्यायः इति शब्दैः एकमेवाधिकरणं (३।१।६.१२) बोध्यते । के०

**अरुणान्यायः** । आरुण्यगुणः क्रयहेतौ एकहायन्यामेव अन्वेति न द्रव्यान्तरे ।

**अरुन्धतीक्षणन्यायः** । स्थूलदर्शनस्य अरुन्धतीक्षणन्यायेन सूक्ष्मदर्शनोपायत्वात् । सिद्धान्तदर्शने निरञ्जनभाष्यम् २।२।८.

**अरुन्धतीनिदर्शनन्यायः** । अरुन्धतीनिदर्शने बह्वीष्वपि तारासु अमुख्यासु अरुन्धतीषु दर्शितासु या अन्त्या प्रदर्श्यते सा मुख्यैवारुन्धती भवति, एवमिहापि आनन्दमयस्य सर्वान्तरत्वात् मुख्यमात्मत्वम् । शांभा १।१।१२ ब्रसू.

**'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् । इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ।'** इति न्यायः । अक्ते अक्के अर्के अङ्क्ते इति पाठचतुष्टयम् । तत्र अक्तम् अक्कं च गृहकोणः । अर्कः लघुवृक्षविशेषः (रूई) । अङ्क्तं समीपम् । न्यायोऽयं प्रसिद्धार्थकः ।

**अर्थस्योक्तत्वेन पुनः प्रयोगवैयर्थ्यादिति न्यायः** । अयम् 'उक्तार्थानामप्रयोगः' (४८३) इति न्यायस्य स्वरूपान्तरम् । साहस्री. ५८४.

**अर्थपृथक्त्वेऽभ्यावर्तते** (सत्या. श्रौ० १।१।३९) इति न्यायात् प्रत्यायतनं मन्त्रावृत्तिः आधाने संभारनिवपने । वैज० ३।३।२३.

**अर्थवशाद्विभक्तिविपरिणाम इति न्यायः** । तद्यथा-'उच्चानि देवदत्तस्य गृहाणि आमन्त्रयस्वैनं देवदत्त'मिति गम्यते ।

**अर्थी समर्थो विद्वानधिक्रियते इति न्यायः** । अयं सन्दर्भः जैमिनीये । तथाहि 'तस्मात्सामर्थ्यप्राप्तोऽवबोधो भाव्यत्वेनावतिष्ठते—'अर्थी समर्थो विद्वानधिक्रियते' इति न्यायेन दर्शपौर्णमासादिविषयाऽवबोधमवेक्षमाणास्तत्त्वबोधे स्वाध्यायं विनियुञ्जते' इत्यादि । साहस्री. ७१९.

**अर्धं त्यजति पण्डितः इति न्यायः** । सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः इति स्पष्ट एव । संग्रहः

**अर्धकुक्कुटीन्यायः** । 'श्रुतशब्दाभिधेयानां नार्थानां युगपत्तथा । ग्रहणाग्रहणं युक्तमर्धकुक्कुटिपाकवत् ॥' वा. ३।१।७।१४ पृ. ७२०

**अर्धजरतीयन्यायः**। यत्र सर्वत्यागे ग्रहणे वा प्रसक्ते निर्यक्तिकमेकांशोपादानमंशान्तरत्यागश्च क्रियते, तत्रायं न्यायोऽवतरतीति।

**अर्धलौकिकन्यायः**। अयं न्यायः 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा' इति श्रीमद्भागवतप्रथमस्कन्धचतुर्थाध्यायपञ्चविंशपद्यविवरणे श्रीमद्वल्लभाचार्यैरुक्तः। तथाहि, यद्यप्यलौकिकप्रकारेण वेदसाध्यं फलमप्यलौकिकमिति न्यायेन तत्सिद्धिः, अथापि अर्धलौकिकन्यायेन वा भारतादिना कार्यं सेत्स्यतीति भावः। साहस्री. ५४१.

**अर्धवैशसन्यायः**। अयं न्यायः पूर्वोक्तार्धकुक्कुटीन्यायसमानविषये प्रवर्तते।

**अलमुन्मत्तपञ्चाशिकादूषणोद्भावनेन इति न्यायः**। उन्मत्तेन विरचिता या पञ्चाशिका पञ्चाशत् श्लोका वा तावन्ति वाक्यानि वा असम्बद्धार्थानि, तेषु दूषणदानं व्यर्थं न क्रियते तद्वत्। संग्रहः.

**अलमुन्मत्तवचसि काव्यदूषणोद्भावनेन इति न्यायः**। यत्र विक्षेपबहुलं धावनमेव पुरुषार्थं मन्यमाना बालैरप्युपहसनीयास्तत्र स्पष्टाभिप्रायोऽयमिति। साहस्री. ७७६.

**'अलाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामिता' इति न्यायः**। तारुण्यमदमत्ता योषित् मत्तकाशिनी नाम। सा पुरुषस्य अलाभे तिर्यञ्चमपि शुनं कामयते उपभोगार्थम्। तद्वत् निन्दार्थोऽयं न्यायः। संग्रहः

**अलौकिकं लौकिके नाङ्ग इति न्यायात्** अलौकिकसामर्थ्यदृष्टान्तः लौकिके न संभवति। कर्मणा जातिपरिवृत्तौ विश्वामित्रदृष्टान्तो न युक्त इति भावः। ब्राह्मणमहासंमेलनविशिष्टाङ्के पृ० १६६.

**'अलौकिकप्रकारेण वेदसाध्यं फलमप्यलौकिकम्' इति न्यायः** श्रीमद्भागवते १।४।२८ पद्ये वल्लभाचार्यैरुदाहृतः। साहस्री. ५४१.

**अल्पेन वैकल्येन छन्दस्त्वं नापैति इति न्यायः**। 'सप्तैता अनुष्टुभः, ताः त्रिः प्रथमया त्रिरुत्तमया एकादश भवन्ति विराट् याज्या द्वादशी ताः षोडश गायत्र्यो भवन्ति, न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्।' ऐब्रा० १०।५।१०.

**'अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम्।'** (रघु० २।४७) इति न्यायः स्पष्टः। संग्रहः.

**अल्पभूयोविरोधन्यायः**। अल्पानां भूयोभिर्विरोधे बाधो भवति इति सा रीतिः। 'न चात्र अल्पभूयोविरोधन्यायोऽस्ति प्रत्ययत्यागे भूयसां तदर्थानां बाधापत्तेः।' सु० पृ० ४७.

**अवगोरणन्यायः**। अवगोरणं ताडनाय दण्डोद्यमनम्।

**अवघातन्यायः** । व्रीह्यवघातन्यायः । अवघातमन्त्रन्यायः । दर्शपूर्णमासयोः अवघातमन्त्रस्य सकृदनुष्ठानम् ॥

**अवयवा अर्थवन्तो, न समुदायः इति न्यायः** । तद्यथा-यस्य हि यत् द्रव्यं भवति, स तेन कार्यं करोति । यस्य च या गावो भवन्ति, स तासां क्षीरं घृतमुपभुङ्क्ते, अन्यैरेतद् द्रष्टुमशक्यम् इत्यपि अर्थवत्सूत्रभाष्ये । साहस्री, ६५१.

**अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति इति न्यायः** । तद्यथा गोः सक्थनि कर्णे वा कृतं लिङ्गं समुदायस्य विशेषकं भवति, एवं प्रकृतेऽपि । अयं 'पूर्ववत्सनः' पा. (१।३।६२) इति सूत्रभाष्ये उक्तः । साहस्री. ६२२.

**अवयवे शास्त्रार्थसंप्रत्ययः इति न्यायः** । वसन्ते ब्राह्मणोऽग्नीनादधीत इति सकृदाधाय कृतः शास्त्रार्थं इति कृत्वा पुनः प्रवृत्तिर्न भवतीति ।

**अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति न्यायः** । यथ 'स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥ इति ।

**अवयवार्थवत्त्वात्समुदायार्थवत्त्वम् इति न्यायः** । अवयवैरर्थवद्भिः समुदाया अर्थवन्त इत्यर्थः ।

**अवशिष्टानामन्ते निवेशः इति** (आगन्तूनामन्ते निवेशः) **न्यायेन** वरुणलोकादनन्तरम् इन्द्रलोकः, तदनन्तरं प्रजापतिलोकद्वारा परशिवलोकं प्राप्नोति । श्रीकरः ४।३।३ ब्रसू.

**अवश्यापेक्षिताऽनपेक्षितयोरपेक्षितं स्मरणीयमिति न्यायः** । स्पष्टम् । साहस्री. ६१.

**'अविच्छिन्ने कथंभावे यत् प्रधानस्य पठ्यते । अनिर्ज्ञातफलं कर्म तस्य प्रकरणाङ्गता ॥'** (वा. ३।३।४।११ पृ० ८१७) **इति न्यायः** । राजसूये कथंभावापेक्षा द्विपविश्रादारभ्य क्षत्रस्य धृति यावत् अनुवर्तते । तथा च 'अविच्छिन्ने...प्रकाराङ्गता' इति न्यायात् राजसूयाद्यङ्गता शौनःशेपोपाख्यानादीनाम् । भामती. ३।३।२५ब्रसू. ।

**अविरविकन्यायः** । अयमेव अव्याविकन्यायः ।

**अविशिष्टं हि लक्षणम्** । इति न्यायेन उपलक्षणानां विशेषणविशेष्यत्वायोगः । सुपृ. ११२२। 'सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम्' (३।१।६।१४) इति सूत्रस्यायमक्षरार्थः— सर्वेषां ग्रहाणां संमार्जनं कर्तव्यं, नैकस्यैव, ग्रहत्वस्य लक्षणत्वात् कृत्स्नव्यक्त्युपस्थापकत्वात् । उद्देश्यताऽवच्छेदकत्वादिति वा । अविशिष्टं समानं हि यस्मात् लक्षणं ग्रहत्वरूपं सर्वग्रहेषु इति । के.

**अविशिष्टस्तु वाक्यार्थः** (१।२।४।३२) **इति न्यायः** । प्रकरणवतोऽर्थस्य

सन्निधाने यमर्थमामनन्ति (मन्त्राः), स तस्य साधनभूतः इत्येव गम्यते । मा. ३।३।१४ पृ० ८४३ ।

**अविहितमप्रतिषिद्धमनुमतं भवति इति न्यायेन** बोधायनसिद्धान्तः (समुद्रयाननिषेधसिद्धान्तः) गौतमादीनामपि सम्मत एव । सना० प्रदीपे प्रमाणप्रकाशः पृ. २८५.

**अव्याविकन्यायः** । अयमेव अविरविकन्यायः ।

**अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते इति न्यायः** । महतां पदं गन्तुं असमर्थाः प्राकृताः जनाः महतां निन्दां कर्तुमारभन्ते । महत्सु अपकर्षितेषु स्वस्य तत्तुल्यताऽपि लब्धुं शक्येत इति तेषां दुराशा । साहस्री. ३५५.

**अशक्तिकृताङ्गत्यागन्यायः** । यथाशक्त्यधिकरणमिदम् ( ६ ३।१। ।

**अशक्तोऽहं गृहारम्भे शक्तोऽहं गृहभञ्जने इति न्यायः** । अयं 'सूचीमुखि दुराचारे रण्डे पण्डितमानिनि । असमर्थो गृहारम्भे समर्थो गृहभञ्जने ।।' इति पद्यमूलकः प्रतीयते । चटकां प्रति वानरवाक्यमिदम् ।

**अशीलं कस्य नाम स्यान्न खलीकारकारणम् इति न्यायः** । अशीलं दुष्टस्वभावः । नाम प्रसिद्धे ।

**अशोकवनिकान्यायः** । अयमेकस्मिन् साध्ये अनेकेषु साधनेषु सत्स्वपि आदौ एकस्मिन् प्रयुक्ते सति साध्यसिद्धौ अन्यप्रयोगेऽर्थाभावात् तत् स्वयमेव निवर्तते, पूर्वं कस्यचित् प्रयोगे चेच्छैव नियामिकेति विवक्षायां प्रवर्तते ।

**अश्मलोष्टन्यायः** । यथा तूलाद्यपेक्षयाऽतिकठिनस्यापि लोष्टस्य अश्मापेक्षया मृदुत्वं, तथा प्रकृतेऽपि । (वैषम्याधिक्यविवक्षायाम् अयं न्याय इति न्यायसंग्रहः) साहस्री. १११.

**अश्रेष्ठः श्रेष्ठानुसारी इति न्यायः** । यथा चोक्तं गीतायां भगवता श्रीकृष्णेन—'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।' इति (३।२१) ।

**'अश्वैरपहृतं को हि गर्दभैः प्राप्तुमिच्छति' इति न्यायः** । 'न च शीघ्रहृतेऽर्थेऽस्ति चिरादागच्छतो गतिः' इति पूर्वार्धः । वा० १।३।२।३ पृ. १७७

**अश्वकर्णन्यायः** । अथ राजसूयशब्दः अव्युत्पन्नः अश्वकर्णन्यायेन नितरां विशेषे वर्तेत । वा. ४।४।१।१. अश्वकर्णः नाम वृक्षः ।

**अश्वतरीगर्भन्यायः** । यथा वडवातो गर्दभादुत्पन्ना अश्वतरी, तस्या गर्भो यथा तन्नाशाय भवति, तथा प्रकृतेऽपि ।

**अश्वभृत्यन्यायः** । कस्यायमश्वो यस्यायं भृत्यः, कस्यायं भृत्यो यस्यायमश्व, इत्यत्र यथा न वस्तुनिर्णयः, तथा प्रकृतेऽपि । साहस्री. २१५.

**अश्वाभिधानीन्यायः** । यद्यपि गायत्र्यादिषु सामावापे निहितेऽपि न स्तो-

भान्तरे तदाकाङ्क्षाशान्तिः इति नात्र अश्वाभिधानीन्यायेन फलतः परिसंख्यात्वं तथापि। भाट्ट. १०।४।१४

**असंजातविरोधित्वन्यायः**। न संजातः विरोधी यस्य, सः असंजातविरोधी, तस्य भावः प्राक्तनविरोधशून्यत्वं, तस्य न्यायः रीतिः प्रबलत्वम्। यः किल आदौ पठ्यते, तस्य नाद्यापि कश्चिद् विरोधी पदार्थोऽस्ति। पश्चात् पठितस्य तु पूर्वपठितो विरोधी स्यान्नाम। अतः पूर्वं पठितः पश्चात् पठितात् प्रबलो भवति। साहस्री. ८४९.

**असंबद्धपदव्यवायन्यायः** (व्यवायान्नानुषज्जते ४।१।१७।४९)।

**असंभवद्विकल्पसमुच्चयन्यायः**। तत्र केचित् पौर्णमास्याममावास्यायां च आग्नेयो भिद्यते असंभवद्विकल्पसमुच्चयन्यायात्।

**असति बाधके प्रमाणानां सामान्ये पक्षपातः इति न्यायः**। साहस्री० १।३।४.

**असत्यां भित्तौ चित्रकर्म इति न्यायः**। मीमांसकास्तु ईश्वरस्य शास्त्रप्रातिपाद्यत्वादि असत्यां भित्तौ चित्रकर्मवत् वर्णयन्ति। शास्त्रप्रकाशिका सम्बन्धे १.

**असाधकं तु तादर्थ्यात् इति न्यायः**। (६।१।१।२) ननु अफलस्य काम्यत्वायोगात् कामशब्दोपबन्धे 'असाधकं तु तादर्थ्यात्' इति स्वर्गकामाधिकरणसिद्धान्तन्यायेन फलपरोऽयं पशुकामशब्दः इत्याशङ्क्य। सु० पृ०।४१५.

**असाधारण्येन व्यपदेशा भवन्तीति न्यायः**। असाधारण्यं च तदितरावृत्तित्वे सति सकलतद्वृत्तित्वमिति।

**असिद्धं बहिरङ्गमन्तरङ्गे इति न्यायः**। अयं शास्त्रे लोके च प्रवर्तते।

**अस्त्रमस्त्रेण शाम्यतीति न्यायः**। अयं मण्डनमिश्रापरपर्यायसुरेश्वराचार्यकृतनैष्कर्म्यसिद्धिटीकायामुक्तः।

**अस्थूलारुन्धतीन्यायः**। यत्रातिसूक्ष्मार्थज्ञापनाय तत्क्रमेण तत्समीपः समीपतरः समीपतमश्चार्थ उच्यते तत्रायं न्यायोऽवतरति।

**अस्नेहदीपन्यायः**। स्नेहः तैलम्। दीपपात्रस्थे तैले समाप्ते दीपज्योतिरपि विनष्टा भवति। एवं यत्र कारणनाशे कार्यनाशो भवति इति प्रदर्श्यते तत्रायं न्याय उदाह्रियते। संग्रहः

**अहिकुण्डलन्यायः**। यथा एकस्य अहेः अहित्वेनाभेदः, तस्यैव कुण्डलावस्थस्य प्रांशुत्वावस्थाद्भेदश्च तात्त्विकः, एवं ब्रह्मणोऽपि चैतन्यरूपेणाभेदो जीवेश्वरत्वादिरूपेण भेदश्च तात्त्विक इति। साहस्री० १५७.

**अहिनकुलन्यायः**। शाश्वतिके विरोधे प्रदर्शनीये अयमुदाह्रियते। साहस्री. ३९९.

**अहिनिर्ल्वयनीन्यायः** । अहिर्निर्ल्वीयतेऽस्यां सा अहिनिर्ल्वयनी । सर्पत्वक् इत्यर्थः ।

**अहिभुक्कैवर्तन्यायः** । अयं तादात्म्याध्यासे एव ज्ञेयः । अहिर्नामोन्मादकरः ओषधिविशेषः, अहिफेनस्यादिकारणं 'पोस्त' इति पाश्चात्यभाषायां प्रसिद्धः ।

**अहीनाधिकरणन्यायः** । द्वादशोपसत्ताऽधिकरणम् । ज्योतिष्टोमे श्रुता द्वादशोपसत्ता अहीनस्यैव, न ज्योतिष्टोमस्य साह्नस्य ॥

**अहृदयवाचाम् अहृदयमेवोत्तरम् इति न्यायेन** स्वमतसिद्धस्यापि परसिद्धिमात्रेण निषेधप्रतियोगितया प्रयोगः । चन्द्रिका. १।२४ पृ. ४०२.

**आकाङ्क्षितविधानं ज्यायः इति न्यायः** । आकाङ्क्षितमेव विधातव्यं न अनाकाङ्क्षितम् इति न्यायार्थः ।

**आकाङ्क्षितविधिन्यायः** । 'दीक्षितो भृतिं वन्वीत' न चास्याः द्रव्यप्राप्तिद्वारा द्रव्यसंस्कारकत्वात् द्रव्यसत्त्वे च तत्प्रापणोपायवैयर्थ्यात् असत्यपि निमित्तत्वश्रवणे प्रयोजनवशादेव आकाङ्क्षितविधिन्यायेन नियमविधित्वोपपत्तिः इति वाच्यम् । अनाकाङ्क्षितविधानस्य फलकल्पकत्वेन दोषत्वात् । भाट्ट० ६।८।६.

**आकाशपरिच्छिन्नत्वन्यायः** । यथा घटाद्यवच्छेदकृतस्याकाशे परिच्छिन्नत्वस्य घटाद्यभावेऽभावः । एवमन्यत्र । साहस्री० ३५२.

**आकाशमुष्टिहननन्यायः** । अयमसंभवद्वस्तुनि प्रयत्नकरणेऽवतरतीति सर्वदर्शनसंग्रहीयजैमिनीये ध्वनितः । मुष्टिना आकाशस्य हननं न सम्भवति यथा, तथा केनचित् असम्भवतो वस्तुनः प्रतिपादने कृते तत्प्रहासार्थम् अयमुदाह्रियते । साहस्री. ६६३.

**आकृतिन्यायः** । 'नागृहीतविशेषणा विशेष्ये बुद्धिः' इति तस्य स्वरूपम् । एतच्च आकृत्यधिकरणस्य बीजम् । आकृत्यधिकरणं तु परस्ताद्भविष्यति । के.

**आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायः** । अयं न्यायो मीमांसादर्शने व्याख्यातः ।

**आख्याविकारन्यायः** । न च अर्थप्रकरणशब्दान्तरैः विस्पष्टं सामानाधिकरण्यमस्ति । येन केन चित् वर्णसामान्यात् आख्याविकारन्यायेन गौणत्वेन वा तद्विषयत्वम् अध्यवसीयेत । वा० २।२।३।३ पृ. ४७६.

**आखुरन्नपिटकन्यायः** । यथा मूषकोऽन्नपिटकं भक्षणीयद्रव्याधारविशेषं पाटयितुमेव शक्नोति, तदुद्धर्तुं सम्यक्सम्पादयितुं वा न शक्नुते इत्यर्थविषयेऽस्य प्रवृत्तिरिति । साहस्री. ८०१.

**आम्नातवैगुण्यन्यायः** । प्रधानेषु समसंख्येषु धर्मविरोधे प्रथमपठितस्यैव धर्मस्यानुग्रहः ॥

**आग्नीध्रशालान्यायः।** (तात्स्थ्यात् ताच्छब्द्यम्) ननु आग्नीध्रशालान्यायेन शालास्थितऋत्विगादीनामपि आग्नीध्रशब्दवत् प्रधानेऽपि आत्मशब्दप्रयोग-दर्शनात्। श्रीकर १।१।७ ब्रसू.

**आग्नेयचतुर्धाकरणन्यायः।** आग्नेयचतुर्धाऽधिकरणं, आग्नेयचतुर्धाऽधिकरण-न्यायः इत्येकमेवेदम्। तच्च 'उपसंहारन्यायः' इति बिन्दौ द्रष्टव्यम् (३।११५।२६) के.

**आग्नेयपशुद्वयन्यायः** ॥

**आग्नेयाज्यभागन्यायः।** आग्नेयाज्यभागस्य आरादुपकारकत्वम्॥

**आग्नेयीन्याय** ॥ आग्न्येय्यधिकरणम्। आग्नेय्यधिकरणन्यायः।

आग्नीध्रोपस्थाने प्रकृतस्यैव मन्त्रस्य ग्रहणम् ॥

**आग्रयणेष्टिन्यायः।** कांस्यभोजिन्यायः। आग्रयणे जवन्यद्यावापृथिव्यानु-रोधेन मुख्यस्य ऐन्द्राग्नादेरपि विरोधाभावात् प्रसूनबर्हिषी नियमः॥

**आतिथ्याबर्हिः प्रोक्षणन्यायः।** आतिथ्याबर्हिष अग्नीषोमीयार्थं स्तरणकाले स्तरणमन्त्रस्यावृत्तिः कार्या ॥

**आत्मार्थे पृथिवीं त्यजेत् इति न्यायेन** प्रधानविरोधिनां बहूनामपि गुणानां बाधनं न्याय्यम्।

**आत्माश्रयन्यायः।** स्वापेक्षत्वमात्माश्रयः। स चोत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा। साहस्री ६०६.

**आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथेति न्यायः।** जगत् उत्पत्तेः प्राङ् नासीत्, प्रलयात् परं च न भविष्यति, इति भाष्ये मध्ये दृश्यमानमपि तात्त्विकं न भवति इति। साहस्री. २६२.

**आदित्याज्जायते वृष्टिः इति न्यायः।** प्रजापतेर्मनूनां मध्ये अन्नपत्नी नाम तनूः। स चादित्यः। 'अन्नस्य पत्नी पालयित्री सूर्यमूर्तिः। आदित्यात्० न्यायेन पालयितृत्वम्।' ऐब्रासा. २४ ६।१७.

**आदित्यगतिन्यायः।** यथा आदित्यगतिः सती प्रत्यक्षेण नोपलभ्यते देशान्तर-प्राप्त्या अनुमीयते, तथा खट्वावृक्षयोः सदपि लिङ्गं सूक्ष्मत्वात् प्रत्यक्षेण अशक्यं ग्रहीतुं तत्कृतकार्यदर्शनादनुमीयते, एवं प्रकृतेऽपीति 'स्त्रियाः' पा. ४।१।३ इति सूत्रभाष्ये स्पष्टम्। साहस्री. ५७८.

**आदौ यच्छ्रद्धया सिद्धं, पश्चान्न्यायेन साधितम् इति न्यायः।**

**आधानस्याप्राप्तकालत्वात्। इति न्यायः।** अवकीर्णिपशुश्च तद्वदाधान-स्याप्राप्तकालत्वात् इति। 'अवकीर्णिपश्वधिकरणम्' इति बिन्दौ द्रष्टव्यम् (६।८।४।२२) विवाहात् प्राक् ब्रह्मचारिणः आधानं न सम्भवति आधानकालस्य तदानीमप्राप्तत्वात् इति न्यायार्थः के.

**आनन्तर्यमकारणम्** इति न्यायः। सु० पृ० ७४६। आनन्तर्यमेकवाक्यत्वे अकारणं असत्यामाकाङ्क्षायाम् भा. ३।१।६।१२। पृ. ६८८,३।१।१४।२४।

**आनर्थक्यतदङ्गन्यायः** ॥

**आनर्थक्यात् तदङ्गेषु**। ३।१।६।१८

**आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्** इति न्यायः। साहस्री. ७५४, प्रबलेन प्रमाणेन दुर्बलस्य प्रमाणस्य सर्वथा बाधे प्राप्ते दुर्बलमपि प्रबलतरं भवति। आनर्थक्येन सर्वथा प्रतिहतानां प्रमाणानां बलाबलं विपरीतं भवति। यत् प्रबलं तद्दुर्बलं भवति, यद्दुर्बलं तत् प्रबलं भवति इति। के.

**आपद्यपि सतीवृत्तं किं मुञ्चन्ति कुलस्त्रियः** इति न्यायः। (न मुञ्चन्ति) अयं पतिव्रतासतीत्वरक्षणविषये प्रवर्तते इति। साहस्री. ६४१.

**आभाणकन्यायः**। आभाणकं लौकिकोक्तिर्लोकप्रसिद्धकथनमिति यावत्। यथा वराटकान्वेषणे प्रवृत्तश्चिन्तामणिं लब्धवानिति वासिष्ठोक्तिरिति। साहस्री. १६५.

**आमनहोमन्यायः**। सांग्रहणीन्यायः। आमनहोमाः सांग्रहणीष्ठ्यङ्गम्॥

**'आमन्त्रणादिसामर्थ्यं लिङ्गमाश्रीयते तदा'** (वा. ३।२ ३।६ श्लोकोत्तरार्धम्)। इति न्यायेन अग्नीत् (अग्नीन् विहर) इति आमन्त्रणसामर्थ्यं प्रैषसामर्थ्यं च लिङ्गसूत्रार्थत्वेन व्याख्येयम्। सु पृ. १०६८.

**आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः। आमिक्षापदसान्निध्यात् तस्यैव विषयार्पणम्॥'** इति न्यायः (२।२।८ २६ पृ ५६४.

**आमोदषट्पदन्यायः**। अयं च पद्येनोपनिबद्धः अनर्घराघवनाटके। तथाहि 'आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम्। गर्भस्थं केतकीपुष्पमामोदेनेव षट्पदाः इति। साहस्री ७८१.

**आम्नायस्य क्रियाऽर्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते** इति न्यायः। १।२।१।१

**आम्नायस्य गतिं वक्तु प्रभवामो नाम्नायं पर्यनुयोक्तुम्** इति न्यायः विनाऽप्यर्थवादं स्तावकत्वे विधेरेव सिद्धेऽपि आम्नायस्य० इति न्यायेन कथंचित् अर्थवादानां सार्थक्यसंपादनार्थमेव पूर्वमीमांसकैः स्तावकत्वमूरीक्रियते, अन्यथा तस्य वैयर्थ्यात्। सनातनधर्मप्रदीपे प्रामाण्यप्रकाशः पृ० ६३.

**आम्रान् पृष्टः कोविदारानाचष्टे** इति न्यायः। अयं हि 'अर्थवत्' इति सूत्रमहाभाष्ये अभिहितः। 'अर्थवत्ता नोपपद्यते केवलेनावचनात्'।

**आम्रवणन्यायः**। आम्राणां वृक्षाणां वनम् आम्रवणम्। यद्यपि न सर्वे वृक्षास्तत्र आम्रा एव भवन्ति चिञ्चापनसादीनामपि तत्र सत्त्वात्, तथापि भूयांस आम्राः इति भूयस्त्वेन आम्रवणम् इत्युच्यते। (प्रनिरन्तःशरेक्षु०

(पा० ८.४।५) इत्यादिना णत्वम् । के० संग्रहः ।

**आयातः प्रवाहः केन वार्यते इति न्यायः** सर्वदर्शनसंग्रहे आर्हते उक्तः । स्पष्टार्थः । साहस्री. ६९८.

**आयुरादिफलन्यायः** । दर्शपूर्णमासगतसूक्तवाक्यस्थयजमानशब्दस्य अनेकयजमानके सत्रादौ ऊहः ॥

**आयुर्घृतमिति न्यायः** । आयुषो निमित्तमिति गम्यते । तज्जनकत्वात् ताच्छब्द्यम् । साहस्री. १९३.

**आरघट्टघटीभ्रान्तिन्यायः** । वायुः सूर्योदयमारभ्य सार्धघटिकाद्वयम् एकैकस्याम् नाड्यां भवति । एवं सति अहर्निशं श्वासप्रश्वासयोः षट्शताधिकैकविंशतिसहस्राणि जायन्ते इति ।

**आरण्यन्यायः** । आरण्यपशुन्यायः । अश्वमेधे परस्वदारण्यपशुयागे पर्यग्निकरणान्ताङ्गरीतिविधानेन तदुत्तराङ्गानां प्रतिषेधः ॥

**आरण्यभोजनन्यायः** । आरण्यभोजनस्यातिदेशिकस्य ज्योतिष्टोमाङ्गप्रायणीयादिषु पयोव्रतादिना प्रसङ्गसिद्धिः ।

**आरब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् इति न्यायः** । अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणम् । इति पूर्वार्धम् । के०

**आरम्भणाधिकरणन्यायेन** ब्रह्मव्यतिरेकेण जगतः अभावात् भेदाभेदविकल्पस्यानवकाशः । अद्वैत. २।४।२४२.

**आरम्भणीयान्यायः** (एकः) । आरम्भणीयायाम् आरम्भणीयाया बाधः ॥

**आरम्भणीयान्यायः** (द्वितीयः) । दर्शपूर्णमासावृत्तावपि आरम्भणीयायाः आदौ सकृदेवानुष्ठानं, न तु प्रत्यावृत्तिः ॥

**आरोपितगुणकथनं स्तुतिरिति न्यायः** । स्तुतिरूपार्थवाद इत्यर्थः ।

**आरोपे सति निमित्तानुसरणं, न तु निमित्तमस्तीत्यारोपः इति न्यायः** । नचैवं घटपटयोरपि तादात्म्यप्रतीत्यापत्तिः, तादृशप्रतीतौ सत्याम् एतस्य निमित्तं कल्प्यते आरोपे सति० इति न्यायात् । सिद्धिव्याख्या पृ १२९-१३०.

**आरोप्यवाचकेन पदेन अधिष्ठानस्य ग्रहणं, न तु अधिष्ठानवाचकेन पदेन आरोपस्य ग्रहणम् इति न्यायस्य** प्रकृते बाधनीयत्वात् । तद्बाधनं च अङ्गानां प्राधान्येन उपास्यत्वावगमात् । इति शङ्का । आभरणं. ४।१।५।६। ब्र. सू.

**आरोहावरोहणन्यायः** । अयं योगशास्त्रे व्यवहृतः । तथाहि, मूलाधारादिब्रह्मरन्ध्रान्तःस्थानेषु आरोहावरोहन्यायेन संचारितपवनः अन्तकाले भ्रुवोर्मध्ये आज्ञाचक्रे प्राणमावेश्येत्याद्युक्तम् । साहस्री. ८१३.

**आर्तिन्यायः** । आर्त्यधिकरणम् । हविरार्तिन्यायः । हविरार्त्यधिकरणम् 'उभयहविरार्तिन्यायः ।' हविरुभयत्वाधिकरणम् । पञ्चशरावन्यायः ।

समस्तपञ्चशरावन्याय: एकहविरार्तावपि पञ्चशरावनिर्वापः ।

**आलम्भनिर्वापन्याय:** । आरम्भनिर्वापाधिकरणम् । ईषाऽधिकरणम् । ईषाऽऽलम्भाधिकरणम् ; दार्शपौर्णमासिकनिर्वापालम्भन्याय: । निर्वापालम्भन्याय: वायव्यसौर्ययोर्वाक्ये यागविधि:, न तु गुणविधि: द्रव्यदेवतासंयोगात् ।।

**आवापोद्वापाभ्याम् अवयवानां शक्तिः इति न्यायः** । वाक्यस्फोटे ग्रन्थकृतां तात्पर्यम् ।

**आवृत्तिरसकृदुपदेशात् इति न्याय:** (४।१।१ब्र. सू नहि सकृत् श्रवणमात्रात् (प्राय:) विद्या दृढा उत्पद्यते 'आवृत्ति०' इति न्यायात्, श्रवणोत्तरकालं मननादिविधानसामर्थ्याच्च । उपदेशसाहस्री – रामतीर्थ: गद्य. ५. ।

**आश्रयदौर्बल्यन्याय:** । आश्रयस्य दुर्बलत्वे आश्रितदुर्बलतरमेव भवति इति न्यायार्थ: ।

**आश्रयिन्याय:** (मेधातिथिना मनु० ४।१ प्रयुक्तोऽयम् ) । आश्रयिकर्मणां दृष्टादृष्टोभयार्थता ।

**आषाढवाते चलति द्विपेन्द्रे चक्रीवतो वारिधिरेव काष्ठा इति न्याय:** । चलतीति सप्तम्यन्तं पदं, देहलीदीपकन्यायेनोभयत्र सम्बध्यते ।

**इक्षुदण्डन्याय:** । यथा इक्षवग्रात् पर्वणि पर्वणि रसोत्कर्षस्तथा सज्जनमैत्र्यपि क्रमश उदर्कतां प्राप्नोतीति ।

**इक्षुरसन्याय:** । गुडशर्करादिषु भिन्नरसरूपादि दृश्यते इक्षुविकारत्वे समानेऽपि । तद्वदन्यत्र । संग्रह:

**इक्षुविकारन्याय:** । यथेक्षुविकारेष्वपि रसगुडशर्करासितासु मालिन्यापगमतारतम्यादेव विभिन्नरूपत्वं दृश्यते तथा सत्त्वादिष्वपि बोध्यमिति । साहस्री. ६८.

**इच्छान्याय:** । इच्छाया: इष्यमाणेन साकं ज्ञानद्वारक: सम्बन्धो नातिरिक्त इति सोऽयम् इच्छान्याय: । न च पुत्रादिधीजन्यसुखादेः पुत्रादिविषयत्वापत्ति: इच्छान्यायात् इति वाच्यम् । अद्वैत० पृ. ४६६.

**इच्छेष्यमाणसमभिव्याहारे इष्यमाणस्य प्राधान्यम् इति न्याय:** । यजेत स्वर्गकाम: इत्यादौ क्लृप्त: । परिमल: १।१।१ पृ० ४६ ब्र० सू.

**इतरमन्य: इति न्यायेन** अध्वर्यो: वरणादिकं प्रतिप्रस्थाता कुर्यात् ।

**इतरस्य प्रयुक्तत्वात्** (१२।१।५।१२) । **स एव न्याय:** 'इतरस्य प्रयुक्तत्वात्' इति 'गार्हपत्ये च हविषा श्रपण श्रुतं स च प्रयुक्तो विद्यते' तस्मात्तत्र (पशुपुरोडाशस्य) श्रपणं कर्तव्यम् । 'अग्नीषोमीयपशुपुरोडाशस्य' इति बिन्दौ द्रष्टव्यम् भा. १२।१।५।१२.

**इन्दुक्ष्वेडन्याय:** । उक्तं च गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वर: । शिरसा

श्लाघते पूर्वं परं कण्ठे नियच्छति ।।' इति । क्ष्वेडस्तु गरलं विषम् । साहस्री. ३२२.

**इन्द्रस्य मध्ये व्यवधानं देवताऽन्तरेण इति पुनरावाहनम् इति न्यायः ।** साकंप्रस्थीये आवाहने 'अग्निमग्न आवह, सोममावह, इन्द्रं महेन्द्रं वा आवह, अग्निमावह, इन्द्रं महेन्द्रं वा आवह । इत्यादिकम् अविकृतम् (प्रकृतिवत्) । 'इन्द्रस्य मध्ये.' इति न्यायः । वैजयन्ती. २।६।५३.

**इन्द्रजालन्यायः ।** इन्द्रस्य योगविशेषेण जालमित्यर्थः ।

**'इन्द्रियाभ्यामजय्याभ्यां द्वाभ्यामेव हृतं जगत् । अहो उपस्थजिह्वाभ्यां ब्रह्मादिमशकावधि ।।' इति न्यायः ।** यथा अनाद्यविद्यया विषयभोगलाम्पट्यमेवानुगमितमिदं जगत् जङ्गमप्राणिजातं सर्वं चेति भावः । साहस्री

**इषुवेगक्षयन्यायः ।** यथा धनुषः सकाशात् मुक्तस्य इषोः बाणस्य कर्मणः प्रारब्धक्षयादेव क्षयः इति प्रसिद्धं, तथा प्रकृतेऽपि । अज्ञाने नष्टेऽपि जीवन-मुक्तिः सिध्यति । साहस्री. २६४.

## ई

**ईर्ष्या हि विवेकपरिपन्थिनीति न्यायः ।** परोत्कर्षाक्षमेर्ष्या स्याद्दौर्जन्यान्मन्युगेऽपि च ' । सा विवेकस्य 'इदं हेयमिदमुपादेयम् इति विवेचनायाः परिपन्थिनी शत्रुरूपेत्यर्थः । ईर्ष्यायां सत्यां विवेको न भवतीत्यर्थः । साहस्री. ६४४.

## उ

**उक्तं क्रियाभिधानम् इति न्यायः** (६।१।१)। यथा षडहात् पृष्ठानामतिदेशः सौमिकादवभृथात् इह (वारुणप्राघासिकेऽवभृथे) धर्मातिदेशः । कुतः ? अभिहितो न्यायः 'उक्तं ...... .. स्यात्' इति । भा. ७।३।४।१२.

**उक्तार्थानामप्रयोगः इति न्यायः ।** (धवखदिरौ इत्यादौ-) सोषा युगपदधिकरणवचनता दुःखा (बुद्धौ अनारोहात्) दुरुपपादा च । कथम्) एकैकशब्दस्य द्वे द्वे अभिधेये (धवत्वखदिरत्वरूपे) स्याताम् ।

**उत्कृष्टदृष्टिर्निकृष्टे अध्यसितव्या इति न्यायः ।** तथा च लौकिको न्यायोऽनुगतो भवति उत्कृष्ट० इति लौकिको न्यायः । यथा राजदृष्टिः क्षत्तरि ।

**उत्खातदंष्ट्रोरगन्यायः ।** जीवन्मुक्तस्य संसारस्तथा । संग्रहः ।

**उत्तरार्धन्यायः ।** दर्शपूर्णमासयोः पुरोडाशः न स्विष्टकृत्प्रयुक्तः ।।

**उत्तरोत्तरं मुनीनां प्रामाण्यम् इति न्यायेन** वाग्योगवित् इत्यादीनां पुरुषार्थपरत्वेऽपि कात्यायनोक्तत्वेन पतञ्जल्युक्तानियमस्मृतेरेव प्रमाणत्वावगमात् वाग्योगवित् इत्यादीनामेव अपस्मृतित्वापत्तिः इति केचित्पक्षे दोषः) । कौ. १।३।८।२७ पृ १३१.

उत्पतितोऽपि हि चणकः शक्यः किं भ्राष्ट्रकं भङ्क्तुमिति न्यायः । अस्यार्थः उत्पतितोऽपि भर्जनसमये भृष्टः सन्नुत्पतितोपीत्यर्थः ।

'उत्पत्तिविनियोगयोर्विनियोगो बलवान्' इति न्यायमूलकं गुणमुख्यव्यतिक्रमाधिकरणम् । (३।३२।९) ।

उत्पत्तिशिष्टगुणावरोधन्यायः । गुणाधिकरणं द्रष्टव्यम्) ।

उत्सर्गादपवादो बलीयान् इति न्यायः प्रसिद्धो भूतहिंसाप्रतिषेध अग्नीषोमीयपश्वालम्भविध्यादौ । उत्सर्गापवादन्यायमश्रित्य विरोधं परिहरति । संक्षेपशारीरके रामतीर्थः २।११४.

उत्सर्गसमानदेशा अपवादाः इति न्यायेन मपर्यन्तस्यैव आदेशे सिद्धे तदनुवृत्तिः (त्वमावेकवचने इत्यत्र) व्यर्था सती ......... भूतिः पृ २०९—२०२ ।

उदकनिमज्जनन्यायः । साहस्री. १२१ ।

उदवसानीयन्यायः । उदवसानीयस्य सत्रानङ्गत्वात् दक्षिणादानम् ऋत्विक्परिक्रयार्थम् ।

'उदितसूर्यार्घ्यनिन्दा अनुदितसूर्यार्घ्यश्लाघामेव करोति' इति न्यायानुसारेण वृषलीत्वबोधकवचनं रजोदर्शनात् पूर्वकालीनदानस्य श्लाघामेव करोति । ब्राह्मणमहासंमेलने. पृ. ६५

उद्दीप्ते भवने च कूपखनने प्रत्युद्यमः कीदृश इति न्यायः । (भवनोद्दीपनोत्तर कूपखननोद्योगः व्यर्थः इति) साहस्री. ८७४.

उद्देश्यविशेषणम् अविवक्षितम् इति न्यायः । (३।१।६।१३।१५) संस्कारमयूखे पृ. २९.

उपक्रमतन्त्रेणोपसंहारेणैकस्मिन् वाक्ये भवितव्यम् इति न्यायेन । न्यायनि. ३।३।२९।५२. ब्र. सू.

'उपक्रमसंकीर्तिता वेदाः उपसंहारगतैर्ऋगादिशब्दैरनुवदितुं शक्यन्ते वेदैकदेशत्वादृगादीनाम् । इति न्यायः वेदोपक्रमाधिकरणस्य पराक्रमः ४।२.

उपजनिष्यमाणनिमित्तोऽपि अपवादः, संजातनिमित्तमपि उत्सर्गं बाधते इति न्यायः । संग्रह.

उपजीवकेन दुर्बलेन उपजीव्यं सबलं न बाधमर्हति (उपजीव्यविरोधस्यायुक्तत्वम्) इति न्यायः । निर्गुणवाक्यं तावत् अत्यन्तं बलिष्ठमेव अन्योपजीवित्वाभावात् ।

उपजीवन्ति शक्त्या हि जलजा जलदानिव इति न्यायः । अस्यार्थस्त्वेवम् हि यतो जलजा जलजीविनः व्रीहिप्रभृतय इत्यर्थः । जलदानिव मेघानिव ।

उपजीव्योपजीवकयोरुपजीवकस्य प्राबल्यम् इति न्यायः । प्रत्यक्षविरोधेन

तदितरसर्वबाध्यत्वे विवक्षितेऽयं प्रवर्तते । अयमन्यत्राऽपि सत्युपजीवकभावे प्रवर्तते ।

**उपदेशः उपदेशमुपोद्बलयति इति न्यायेन** 'उत्तरवेद्यामग्निं निदधाति' इत्युपदेशोपोद्बलकतया स्वविषयपर्वद्वये एव 'तयोः प्रणयन्ति' इत्यस्य उत्तरवेदिव्यवस्थापकत्वम् इति प्राभाकराः । सोम. ७।३।६ पृ. ५३८

**उपदेशानुपदेशत्वे विपरीतं बलाबलम् इति न्यायः** उपजीव्योपजीवकयोरुपजीव्यस्य प्राबल्यम् इत्यस्य बाधकः संग्रहः ।

**उपयन्नपनयनधर्मो विकरोति हि धर्मिणमिति न्यायः** । यथा पूर्वरूपरसादि धर्मस्य परिवृत्तौ रूपरसाद्युत्तरोत्पत्तौ च तण्डुलादेर्धर्मिणो विकृतिर्दृश्यते, तथा प्रकृतेऽपि यस्य धर्मिणः पूर्वधर्मस्यापगमे अन्यधर्मस्योत्पत्तिः तत्रायं न्यायोऽवतरतीति । साहस्री. ७३.

**उपयाजगुदसमुच्चयन्यायः** । उपयाजसाधनानां गुदानां समुच्चयः ऐकादशिनेषु पशुषु ॥

**उपरवन्यायः** । उपरवमन्त्रस्य प्रत्युपरवखननम् आवृत्तिर्ज्योतिष्टोमे ।

**उपरिधारणन्यायः** । प्रेताग्निहोत्रे श्रुतस्य उपरिसमिद्धारणस्य दैवे कर्मणि विधिः, न तु अधस्तात्समिद्धारणशेषार्थवादत्वम् ।

**उपलक्षणापायेऽपि उपलक्ष्यानपाय इति न्यायः** प्रतिदिनं शङ्खवेलायामागन्तव्यम् इत्यादौ प्रसिद्धः ।

**उपलक्षणीयानपायन्यायः** (१०।८।१४।६६) । अयमेव लक्ष्यानपायन्यायः । 'वस्तुतः उक्थ्यानन्तरस्य पश्चात् संपत्तावपि पूर्वमपि उपलक्षणीयानपायन्यायेन सम्भवमात्रेण पूर्वपक्षप्रवृत्त्युपपत्तेः ।

**उपलक्ष्यानपायन्यायः** । 'उपलक्षणापायेऽपि उपलक्ष्यानपायः' इति न्याये द्रष्टव्यम् ।

**उपवासाद्वरं भिक्षेति न्यायः** । अत्र वरमिति सामान्ये नपुंसकम् ।

**उपसंहारन्यायः** । आग्नेयचतुर्धाऽधिकरणम् । आग्नेयचतुर्धाऽधिकरणन्यायः । चतुर्धाकरणम् । चतुर्धाधिकरणम् । आग्नेयस्यैव पुरोडाशस्य चतुर्धाकरणं, नाग्नीषोमीयादेः ॥

**उपसत्स्वस्थानविवृद्धिन्यायेन** (५।३।२।३) प्रयाजानामेकादशत्वसिद्धये स्वस्थानविवृद्धौ उत्तमः प्रयाजस्त्रिरभ्यसनीयः । वि. ५।२।२.

**उपसन्न्यायः** । उपसदः अपूर्वाः ॥

**उपसर्गन्यायः** । यत्रैकवस्तुनः उपाधिभेदेन नानात्वविवक्षा, तत्रायं प्रवर्तते (भिन्ना उपसर्गाः एकमेव धातुं नानाऽर्थकं कुर्वन्ति 'प्रहाराहारसंहारविहारपरिहारवत्' तद्वदन्यत्रेति) । साहस्री. ६६२.

**उपस्तरणादिविधिन्यायः** । उपस्तरणाभिधारणाभ्यां सहैव चतुरवत्तसम्पत्तिः

**उपहोमन्यायः** । नारिष्ठन्यायः । नक्षत्रेष्टिन्यायः । नक्षत्रेष्ट्युपहोमन्यायः। अन्तेनिवेशन्यायः । नक्षत्रेष्ट्यादौ नारिष्ठहोमा पूर्वम्, उपहोमाः पश्चात् कार्याः ।

**उपासनफलभाजो यजमानस्यैव उपासनकर्तृत्वम् इति न्यायः** (पूर्वपक्षे) । कल्पतरुः ३।४।१३।४४ ब्र. सू.

**उपास्योपासकयोर्भेदाभेदः सम्भवेत् इति न्यायेन सर्ववेदान्तसिद्धान्तः** । श्रीकरः ३।३।३५ ब्र. सू.

**उपोद्घातन्यायः** । 'प्रतिपाद्यमर्थं बुद्धौ संगृह्य प्रागेव तदर्थम् अर्थान्तरवर्णनम् उपोद्घातः' । न च सूत्रकारवत् भाष्यकारेणापि विषयप्रयोजनवत्त्वं मुखतो नाभिधेयम् इति वाच्यम् । शिष्यानुग्रहाय उपोद्घातन्यायेन प्रवर्तनात् । शारीरकभाष्यवार्तिकम् पृ ३१.

**उष्ट्रकण्टकभक्षणन्यायः** । यथा उष्ट्रस्य शमीकण्टकवेधजातदुःखकालेऽपि शमीपत्रभक्षणजसुखलेशो भवति, तथा अभीष्टविषयोपार्जनदुःखकाले तदुपार्जितद्रव्यजसुखलेशो यत्रोपदिश्यते, तत्रास्य प्रवृत्तिरिति । साहस्री. ४६९

**उष्ट्रलगुडताडनन्यायः** । उष्ट्रताडनं तन्मानेनैव लगुडेन क्रियते । तथा तार्किकोत्थापिता शङ्का तन्मतेनैव निराक्रियते । संग्रहः

**उष्ट्रलगुडन्यायः** । अयं हि स्वमते परेणोद्भाव्यमानानाम् दूषणानां तन्मते पातने ऽवतरतीति । यथा उष्ट्रेणोह्यमानेनैव लगुडेन तत्प्रहारः, तथा प्रकृतेऽपि । साहस्री. १०८.

**ऊर्णनाभिन्यायः** । यथोर्णनाभिः स्वत ऊर्णां सृजति संहरति च एवं जगदीश्वरोऽपि सृजति संहरति च ।

**ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति (प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ।। इति न्यायः** । अयं न्यायोऽर्थवादरूपः प्रत्युत्थानप्रशंसापरः (यूनः प्राणाः स्थविरे आयति सति ऊर्ध्वम् उत्क्रामन्ति इव) साहस्री. ६३२.

**ऊषरवापितबीजन्यायः** । वैयर्थ्यबोधकोऽयम् । यत्र क्रिया निष्फला तत्रैवावतरतीति स्पष्टार्थः । साहस्री. ५६३.

**ऊषरवृष्टिन्यायः** । यथा ऊषरे जायमानाऽपि वृष्टिर्व्यर्था न धान्यजननायालम् । एवं यत्र कर्मादि निष्फलं तत्रायं प्रवर्तते । कं.) साहस्री .२९५.

**ऋतुलिङ्गन्यायः** 'यथर्तुलिङ्गान्यृतवः स्वयमेवर्तुपर्यये । स्वानि स्वान्यभिपद्यन्ते तथा कर्माणि देहिनः ।।' (मनुः१।६० मेधापाठः) 'यथर्तुष्वृतुलिङ्गानि

नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥' इति । (शांभा, १।३।३०ब्र. सू.) इदं न्यायस्वरूपम् । के.

**एकस्याप्यनेकशक्तिसंभवादनेकार्थप्रत्यायनमविरुद्धम् इति न्यायः ।** अनेकार्थशब्देषु चरितार्थोऽयं न्यायः स्पष्टार्थः । साहस्री. ४२८.

**एकत्र निर्णीतः शास्त्रार्थोऽन्यत्रापि तथा इति न्यायः ।** यत्र स्वमतविरुद्धेषु नानाविधवादिमतेषु एकत्र प्रबलयुक्तिशास्त्रप्रमाणसिद्धस्वमतेन स्वमतविरुद्धवादिमतं निरस्तं चेत्, तद्न्ये सर्वे निरस्ता ज्ञेया इति । साहस्री. २५८.

**'एकोऽपि हन्ति गुणलक्षमपीह दोषः । कश्चित् परो यदि गुणोऽस्ति न तद्विरोधी । मद्यस्य बिन्दुरपि पावनपञ्चगव्यसंपूर्णमत्र कलशं मलिनीकरोति ।** इति न्यायः स्पष्टार्थः । साहस्री. ५७६.

**एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः । इति न्यायः** अयं कुमारसम्भवे कालिदासोक्तिरूपः स्पष्टाऽभिप्रायकः । साहस्री. ५०७.

**एरण्डबीजन्यायः** यथा बन्धच्छेदात् एरण्डबीजवच्चोर्ध्वगतिरिति । साहस्री. ६०५.

**ऐकमत्ये द्वयोरेव किमसाध्यं भवेदिति न्यायः ।** अयं च एकमतिविशिष्टौ द्वावपि सर्वं स्वाभीष्टं साधयतः इति विषये प्रचरतीति । साहस्री. ६४३

**'कः प्राज्ञो वाञ्छति स्नेहं वेश्यासु सिताासु च' इति न्यायः ।** वेश्यासु स्नेहं सौहार्दम्, सिकतासु च स्नेहं तैलं न कश्चित् लभते इत्यर्थः । साहस्री. ८४६.

**कच्छपन्यायः ।** गुरुणा शिष्ये क्रियमाणस्य षष्ठप्रकारस्य शक्तिपातस्य दृष्टान्तः कच्छपः । श्रीकर. ३।२।५. ब्र. सू.

**कण्टकं कण्टकेनैव इति न्यायः ।** पादादौ प्रविष्टमेकं कण्टकम् अपरेण दृढेन कण्टकेनैव निःसारयन्ति, तथा एकं कुटिलं शत्रुम्, अन्येन तादृशेनैव वशीकृतेन शत्रुणा नाशयन्ति इति न्यायस्य अर्थ उपयोगश्च । संग्रह.

**कण्टकन्यायः ।** तत्र कण्टकाः प्रसिद्धाः, शत्रवश्च । तत्र प्रथमपक्षे पादप्रविष्टं कण्टकं यथा दृढेन कण्टकान्तरेण निष्कास्य, अनेनापि कालान्तरे पीडा मा भूत् इति तमपि अग्न्यादौ प्रक्षिपन्ति ।

**कण्ठचामीकरन्यायः ।** चामीकरः नाम कृतस्वराज्यः खनिविशेषः । तत्र भवं सुवर्णं चामीकरम् ।

**कतकरजोन्यायः ।** यथा कतकबीजं जलस्थं मलं नीत्वा स्वयमपि अधस्तात् गच्छति एवं ब्रह्माकारवृत्तिः प्रपञ्चं निर्वर्तयित्वा स्वयमपि निवृत्ता भवति इति । आत्मबोधः ।

**कदम्बमुकुलन्यायः ।** कदम्बो वृक्षविशेषः, तस्य मुकुलः ईषद्विकसितपुष्पं

कलिकेति यावत् 'कुड्मलीमुकुलोऽस्त्रियाम्' इत्यमरः। तद्यथा गोलाकारकदम्ब-पुष्पस्य गोलके यथा सर्वावयवेषु युगपत्पुष्पाणामुत्पत्तिः, एवं शब्दस्यापि। अपि चोक्तम्— 'कदम्बमुकुलन्यायादुत्पत्तिः कस्यचिन्मते' इति। साहस्री. २२८.

**'कदर्याणां परे प्राणाः प्रायेणाऽनर्थसंचयाः'** इति न्यायः। कदर्यलक्षणम्-आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन्। यो लोभात् संचिनोत्यर्थान् स कदर्य इति स्मृतः।' इति। साहस्री. ६३८.

**कदलीफलन्यायः**। कदलीफलं यथा स्वजननीं कदलीं नाशयति, तथा ज्ञानम् अज्ञानं नाशयति इति। संग्रह.

**कनककुण्डलन्यायः**। यथा सुवर्णजन्यकुण्डलस्य सुवर्णाभिन्नत्वम्, तथा ब्रह्मरूपकारणजन्यजगतः कार्यस्य ब्रह्मरूपकारणाभिन्नत्वमिति। साहस्री. ४१६.

**कन्दुकन्यायः**। यथा कन्दुकः कराघातैः पतितोऽपि स्वभावत एवोत्पतति, तथा साधुवृत्तयो भवन्तीति। साहस्री. ८८०.

**करस्थबिल्वन्यायः**। बिल्वस्य फलं बिल्वम्। फलात्मके विकारे तद्धितस्य लुक्। करे स्थितं बिल्वं यथा चक्षुषैव दृश्यते, न तत्र संशयादिसंभवः। तद्वत् ब्रह्मणि प्रत्यगात्मतया साक्षात्कृते न संशयविपर्ययादिसम्भवः इति। साहस्री. २९१.

**करिघण्टान्यायः**। यत्र बलापेक्षया बुद्धेर्महत्त्वं विवक्ष्यते, तत्रास्यावतारः। उक्तं च—'मतिरेव बलाद्गरीयसी यदभावे करिणामियं दशा। इति घोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन्॥' इति। साहस्री. ६५३.

**करिबृंहितन्यायः**। अयं विशिष्टवाचकपदानां सति पृथग्विशेषणवाचकपद-समवधाने विशेष्यमात्रपरतायां प्रवर्तते।

**कर्णे पृष्टे कटिं चालयति** इति न्यायः। एतेन ज्ञानानिवर्त्यत्वरूपसत्त्वा-भावनिवेशे असत्त्वाभाववैयर्थ्यमाशङ्कितम्, विषयताविशेषरूपसत्त्वाभाव-निवेशेन च तत् समाहितम् इति 'कर्णे पृष्टे' इति न्यायेन संदर्भाशुद्धिः, इति परास्तम्। विठ्ठल० पृ० ८१.

**कर्णकौन्तेयन्यायः**। यथा कर्णः कौन्तेय एव सन्नपि कौन्तेयत्वाज्ञानात् राधेयमात्मानं मेने, पश्चादाप्तोपदेशेन कौन्तेयमात्मानं मन्यते स्म, तथा ब्रह्मैव स्वस्वरूपाज्ञानात् जीवमात्मानं मन्यते। गुरूपदिष्टमहावाक्यजबोधात् अबोध-बाधे ब्रह्मैवाहमिति मन्यते इति। साहस्री. ३५६.

**'कर्तव्यं हि सतां वचः'** इति न्यायः। सद्भिः कर्तव्यतया यद्विहितं तत् कर्तव्यम् इत्यर्थः। साहस्री. ७३२.

**कलञ्जभक्षणप्रतिषेधन्यायः** । कलञ्जन्यायः । प्रतिषेधातिक्रमे पुरुषस्य प्रत्यवायः ।

**कष्टं कर्मेति न्यायः** । कर्मणो दुःखहेतुत्वम् अनुभवसिद्धमिति भावः । साहस्री० १७४.

**कांस्यभोजिन्यायः** । अस्यायमर्थः । यथा मया नित्यं गुरूच्छिष्टं भोक्तव्यं कांस्यपात्रे च भोक्तव्यमिति नियमवतो विनेयस्य नियमाभङ्गाय गुरुर्नित्यं कांस्यपात्रे भुङ्क्ते इति । यद्यप्ययं शास्त्रीयः, तथाप्येतद्व्यवहारस्य लौकिकत्वात् सुन्दोपसुन्दन्यायवल्लौकिकेषु परिगणित इति । साहस्री० ३३८.

**काकतालीयन्यायः** । अयं न्यायोऽष्ठलुप्तोपमालङ्कारमीमांसायां धर्मोपमानवाचकलुप्तोपमोदाहरणे 'यत्तया मेलनं तत्र लाभो मे यश्च तद्रतेः । तदेतत् कालतालीयमवितर्कितसम्भवम् ॥' इति ।

**काकदधिघातकन्यायः** । संग्रह : (उत्तरन्याये द्रष्टव्यम्) ।

**काकतालीयन्यायः** । यथा 'काकेभ्यो दधि रक्ष्यताम् इत्युक्ते काकपदं दध्युपघातकमात्रलक्षकम्, एवं यत्र तात्पर्यवशेनेतरार्थपरत्वं तत्रास्य प्रवृत्तिः । साहस्री. १२४.

**काकदन्तपरीक्षा (गवेषण) न्यायः** । काकस्य दन्ताः सन्ति न वा, तेषां शौक्ल्यं न वेति विचारो यथा निष्फलः एवं यत्र तत्रास्य प्रवृत्तिः । साहस्री. ३०४.

**काकपिकन्यायः** । 'काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः । प्राप्ते वसन्तसमये काकः काकः पिकः पिकः । ' साहस्री. ६।५१.

**कारणनाशे कार्यनाशः इति न्यायः** । केचित् समवायिकारणनाशे कार्यनाशो यथा तन्तुनाश पटनाश इति वदन्ति । परे तु असमवायिकारणनाशेऽपि कार्यनाशो यथा तन्तुसंयोगनाशे पटनाशः इति वदन्तीति । साहस्री-२७६.

**कारणसत्यत्वे कार्यस्य सत्यत्वम् इति न्यायः** । तेन कारणरूप सर्ववेदात्मक विमर्शराशेर्नित्यत्वात् कार्यरूपवेदस्यापि नित्यत्वं निष्प्रत्यूहम् । श्रीकर १।१।३ ब्र. सू.

**कारणानुविधायि कार्यम् इति न्यायः** । स्मृतीराचारांश्चोपलभ्य मूलश्रुतिषु अनुमीयमानासु कारणानुविधायिकार्यन्यायेन अवश्यमुपलभ्यमानकार्यानुरूपकारणानुमानैर्भवितव्यम् इति भावनानामविशेषव्यवच्छिन्नयागदानहोमोपवासादिधात्वर्थविशेषस्वर्गादिफलकारकेतिकर्तव्यतानिश्चयस्तावदनुमातव्याः । वा. १।३। ७।१६ पृ० २४५.

**कारणाभावे कार्याभावः इति न्यायः** । नक्तावस्थायां लिङ्गशरीरसद्भावे

'कारणाभावे कार्याभावः' इति न्यायेन तल्लिङ्गशरीरोपादानकारणनाशरूपाद्य-विद्यास्थितिरर्थात् सूचिता । श्रीकर. ४।२।१५ ब्रसू०

'कार्यं बादरिरस्य गत्युपपत्तेः' (४।३।७ ब्र०सू०) इति न्यायः । 'अमृतत्वं च गच्छति' इति गमनोपादानात् कार्यममृतत्वम्, न कैवल्यम् 'कार्यं०' इति न्यायात् । नृ०पू०भा० १।२.

कार्यं सर्वं कारणमात्रमिति न्यायः । कार्यं सर्वं घटादिरूपं मृन्मात्रमित्यर्थः । साहस्री. ५४३.

कार्यात् कारणजन्म इति न्यायः । यत्र कार्यात्कारणोत्पत्तिर्विवक्ष्यते, तत्रायं प्रवर्तते । साहस्री. ५५८.

कार्येण कारणसंप्रत्ययः इति न्यायः । यथा घटादिरूपकार्येण कुलालादिरूप-कारणस्य संप्रत्ययो भवतीति स्पष्टम् । साहस्री. ३८.

काव्यन्यायः । तथा अर्थवादाः केचित् (भारतादिषु) वैदिका एव, केचिल्लौ-किका एव, केचित्तु स्वयमेव काव्यन्यायेन रचिताः, सर्वे च स्तुत्यर्थेन प्रमाणम् । वा० १।२।१७ पृ० ११६.

काशकुशावलम्बनन्यायः । अयमेव कुशकाशावलम्बनन्यायः । निर्दोष-कारणासम्भवे काशकुशावलम्बनन्यायेन अनुमानं मया वाच्यम्, शब्दस्य कारणस्य सद्भावात् अनुमानस्य च बहुदोषत्वेन मयाऽपि ज्ञातत्वात् नानुमानमहं ब्रवीमि । सु० पृ० ८४०.

किमज्ञानस्य दुष्करम् इति न्यायः स्पष्टार्थः । साहस्री. ७७८.

कस्मैचिद्दत्तस्य पुनः कस्मै चिद्दानं कर्तुं न शक्यम् इति न्यायः । वि० ३।४।२१। अस्यापवादः स्विष्टकृद्धोमः । ३।४ ५६.

'कस्मै देवाय हविषा विधेम' (ऋसं० १०।१२०।४—६) इति । एकस्मै देवाय इत्यर्थः । एकारलोपेन एतच्छब्दविज्ञानात् एतदर्थप्रत्ययो भवति । एकस्मै देवाय हविर्दातव्यमिति । भा० १०।३।२।१५ पृ० १८७०.

किञ्चित् वस्तु स्वत एव विलक्षणम् इति न्यायेन प्रपञ्चस्य सदसद्रूपत्वो-पपत्तेः । सिद्धव्याख्या पृ० ८१.

किमु ज्ञानस्य दुष्करम इति न्यायः । संग्रहः ।

कीटभृङ्गन्यायः । यथा कीटको भ्रमरं ध्यायन् भ्रमरत्वाय कल्पते । एवं च कीटो भ्रमरेण गृहीतस्तद्भिया तमभिध्यायन् तत्स्वरूपतामेति, तथा हरिहरौ प्रेम्णाऽन्योन्यमभिध्यानादन्योऽन्यात्मकतां प्राप्तावित्यर्थः । साहस्री. ११०

कीटोद्धारन्यायः । यथा नदीप्रवाहपतिताः कीटा आवर्तादावर्तान्तिरमाशु

व्रजन्तो दुःखिताः सन्तः सत्कर्मपरिपाकात् (पूर्वोपार्जितपुण्यकर्मपरिपाकात्) कृपालुना केनचित् पुरुषविशेषेणोद्धृता नदीप्रवाहाद्बहिर्निःसारिताः सन्तः तीरतरुच्छायां प्राप्य सुखं यथा भवति तथा विश्राम्यन्ति, तथैवमाशु स्वकृतकर्मजन्यफलभोगाय मनुष्यादियोनिषु जन्मनो जन्म व्रजन्तो जीवाः संसारानलदग्धा दुःखं लभमानाः पूर्वोपार्जितपुण्यकर्मपरिपाकादेव तत्त्वदर्शिनः प्रत्यगभिन्नब्रह्मसाक्षात्कारवदाचार्यात् सद्गुरोः सकाशादुपदेशं तत्त्वमस्यादिमहावाक्यार्थजन्यज्ञानरूपमवाप्य मोक्षसुखं प्राप्नुवन्तीति। साहस्री. ५५०.

**कीलप्रतिकीलन्यायः** । अयं यथा "अन्तःकरणसम्बन्धात् निखिलानीन्द्रियाण्यपि। रथाङ्गनेमिवलये कीलिता इव कीलकाः ॥" इति। साहस्री. ८१०.

**कुकर्म सर्वं सर्वस्य फलत्यात्मनि सर्वदा इति न्यायः** । स्पष्टार्थः । साहस्री. ७३५.

**कुक्कुटध्वनिन्यायः** । आदौ लघुरपि पश्चात् दीर्घो भवति, तद्वत् सज्जनमैत्री । संग्रहः ।

**कुक्कुटध्वनिन्यायः**। यथा कुक्कुटध्वनिर्ह्रस्वदीर्घप्लुतभेदेन क्रमेण वर्धते, तथा साधुमैत्री । कुक्कुटरुते उकारे एकद्वित्रिमात्रत्वप्रसिद्धेः अकारादयो नोक्ता इति 'ऊकालोऽज्भ्रस्वदीर्घप्लुतः' (पा० १/२/२६) इति सूत्रे शब्देन्दुशेखरे इति । साहस्री. ३३३.

**कुञ्जरस्नानन्यायः** । अयं स्वच्छकर्म कृत्वा तदनु तत्कृतकर्मविघातककर्मकरणविषये प्रवर्तते ।

**कुण्डधारोपास्तिन्यायः** । यथा कुण्डधारो हि कश्चिद्यक्षो धनार्थं स्वविषयकोपासनं कृतवतः कस्यचित्प्रत्यक्षीभूय धनादिरूप-पुरुषार्थमल्पं मन्वानस्तेन सह देवसंमतिं प्राप्य, देवताः प्रार्थ्य, तत्प्रसादेन ज्ञानानुष्ठानभाजं कृत्वा तं मोक्षभागिनमकरोदिति भारते प्रसिद्धिः । तथा शिवशक्त्यादिमन्त्रग्रहीतुरपि तत्तद्देवताः स्वप्रसादेन मोक्षोपायानुष्ठानादि-विरोधिरजस्तमोनिबर्हणतत्त्वाभिवृद्धिद्वारा चिराय मोक्षं संपादयन्तीति रामानुजीया इति । साहस्री. ८४३.

**'कुब्जोपि चित्रं दर्शयितुं समीहते'** इति न्यायः । कुब्जः नाम हस्तेन विकृतः । साहस्री. ८०४-८०५.

**कुमारीकङ्कणन्यायः** । अयं श्लोकेन विवृतः । तथाहि 'बहूनां कलहो नित्यं द्वाभ्यां संघर्षणं तथा । एकाकी विचरिष्यामि कुमारीकङ्कणं यथा ॥' इति । साहस्री. ८१६.

**कुमारीन्यायः** । कुमारीकङ्कणन्यायार्थक एवायम् । संग्रहः ।

**कुम्भीधान्यन्यायः** । कुम्भी उखा, रन्धनस्थालीति यावत् ।

**कुरुपाण्डवन्यायः** । यद्यपि आचारोपि कर्मविशेष एव, तथापि करणा-

चरणयोः भेदोक्तिः कुरुपाण्डवन्यायेन । गोविन्दभाष्यम् ३/१/१२ ब्र. सू. ।

कुलकन्यान्यायः । यथा कुलकन्यका सहजसौन्दर्यादिगुणैर्निजजनकहर्म्ये एव गौरवं प्राप्नोति, तथा विवक्षायामयमवतरतीति । प्रोक्तं च रुद्रकविना—"सत्यं सन्ति गृहेगृहे सुकवयो येषां वचश्चातुरी, स्वे हर्म्ये कुलकन्यकेव लभते जातैर्गुणैर्गौरवम् ॥' इति । साहस्री. ६९६.

कुलालचक्रकीटन्यायः । यत्र शीघ्रगत्या आधाराश्रयेण आधेयस्य प्रतीपगतिः प्रतीयते, तत्रायमवतरतीति । ज्योतिःसिद्धान्तेऽयं व्यवहृतः । तथाहि 'यान्तो भचक्रे लघुपूर्वगत्या खेटास्तु तस्यापरशीघ्रगत्या । कुलालचक्रे भ्रमिवामगत्या यान्तो न कीटा इव भान्ति यान्तः ॥ इति सिद्धान्तशिरोमणिगोलाध्याये भास्कराचार्येणोक्तः । इति ।

कुलालचक्रन्यायः । यथा हस्तदण्डादिभ्रमिप्रेरितं कुलालचक्रमुपरतेऽपि तस्मिंस्तद्बलादेव आसंस्कारक्षयं भ्रमति, तथा भवस्थेनात्मना अपवर्गप्राप्तये बहुशो यत्कृतं प्रणिधानं मुक्तस्य तदभावेऽपि पूर्वसंस्कारादालोकान्तं गमनमुपपद्यते इत्याहुता आहुः । साहस्री. 703.

कुलालचक्रभ्रमणन्यायः । जीवन्मुक्तिः सिध्यति न्यायेनानेन । संग्रहः ।

कुशकाशावलम्बनम् इति न्यायः । अयमेव काशकुशावलम्बनन्यायः । ऋजु० पृ० 73.

कुशकाशावष्टम्भनन्यायः । नद्याः वेगेन नीयमानो यः तीरगतं वृक्षमपि अवष्टभ्य स्थातुं न शक्नोति, तस्य यथा कुशावष्टम्भनं काशावष्टम्भनं चानर्थकं तथैतदपीत्यर्थ इति । सु० पृ० २९२.

कुसुमस्तबकन्यायः । यथा पुष्पस्तबकं द्विगतिकं भवति सर्वलोकमूर्धस्थितिर्वा वने विशीर्णता वा, तथा महात्मनामपीत्येवंविषयेऽस्य प्रवर्तनमिति । (तदुक्तं 'कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः । मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा' ॥) साहस्री. ६८५.

कुसूलधान्यन्यायः । अयमपि नीलकण्ठेन व्यवहृतः । तथाहि 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति गीताप्रतीकमादाय कुसूलेन धान्यमिव मयेदं जगद्विष्टब्धमित्युक्तमिति । साहस्री. ६२२.

कूपखानकन्यायः । यथा कूपखानकेन पतितं पङ्कादि कूपान्निःसृतेन अम्भसा प्रक्षाल्यते, तथा तत्तद्विग्रहावच्छिन्नेशभेदबुद्धिजो दोषः तदुपासनाजन्यसुकृतमहिम्ना उत्पन्नेनाद्वैतबोधेन समूलं निवर्त्यते इति ज्ञेयम् । साहस्री. १५०.

कूपमण्डूकन्यायः । यत्र महाजनप्रणीतसत्यपदार्थं ज्ञानलवदुर्विदग्धोऽल्पज्ञो न संमनुते तत्रास्य प्रवृत्तिः ।

कूपयन्त्रघटिकान्यायः । अस्यार्थः प्रकारान्तरेणापि, गम्भीरकूपादपि

यन्त्रेण घटिका उत्तोल्यते, एवमतिदुर्बोधत्वेन गम्भीरादपि शास्त्रादुपदेशादिरूप-यन्त्रेण सारोद्धरणं भवतीति । साहस्री. ६६४.

**कूर्माङ्गन्यायः ।** यथा कूर्मदेहे तदिच्छया तदङ्गानि निःसरन्ति लीयन्ते च तत्रैव, एवं यस्येच्छावशात् स्वोपाध्यज्ञानकार्यजातस्य स्वोपाधौ संकोचविकास-कारित्वम् एवं विवक्षाविषयेऽस्य प्रवृत्तिः । 'यथा संहरते चायं कूर्मोऽङ्गानीव सर्वशः' इति भगवद्गीता । साहस्री. १७७.

**कृतमप्यकृतं भवेत् इति न्यायः ।** 'श्राद्धं श्रद्धाविहीनेन कृतमप्यकृतं भवेत् ।' स्कन्दपुराणे प्रभासखण्डे वस्त्रापथक्षेत्रमाहात्म्ये १३।४१ ।

**'क्लृप्तेन विनिगमनाविरहे कल्प्यमन्यत् सिध्यति इति न्यायः ।** रहस्य. पृ० 99.

**क्लृप्तकल्पनान्यायः ।** (क्लृप्तं कल्प्याद् बलीयः) ।

**केशश्मश्रुन्यायः ।** स्त्रियाः यावदुक्ते एवं कर्मणि अधिकारः ।

**कैदारिकन्यायः ।** यथा कैदारिकः केदारेषु कुल्याजलं संचारयन् एकस्य द्वारं पिधाय अपरस्योद्घाटयति, तद्वत् वैराग्येण विषयस्रोतः खिलीक्रियते अभ्या-सेन, कल्याणस्रोतः उद्घाटयते इति । (नीलकण्ठः गीता. ६।३५) । साहस्री. ६१४.

**कैमुतिकन्यायः ।** अयं दृष्टान्तदार्ष्टान्तिकयोः स्तुतिनिन्दोभयसाधारणः । 'मां हि पार्थ व्यपाश्रित्य' (गी. ९।३२) इत्यपिशब्दसूचितोऽयं न्यायः । संग्रहः ।

**कोटिशो दृश्यमाणोपबृंहणन्यायः ।** एतन्न्यायानुरोधात् ईश्वरस्य अजरत्वा-देर्विग्रहगुणत्वसिद्धिः । स्वधीकल्पितैः न्यायैर्व्यवस्थापनात् उपबृंहणानुरोधेन अव-स्थापनं ज्यायः इत्यर्थः ।

**कोषपानन्यायः ।** व्यवहारे दिव्यविशेषोऽयम् ।

**कौत्सादिन्यायः ।** कौत्सादिसामभिः विकृतिविशेषे श्रूयमाणैः तत्समसंख्याक-प्राकृतसामबाधः ।

**क्रियाभेदात् फलभेद इति न्यायः ।** यथा यथा यद्यत्करोति तथा तथा तत्तत्फलमाप्नोतीति । साहस्री. ५३९.

**क्वचिदपवादविषयेऽपि उत्सर्गोऽभिनिविशते इति न्यायः** (पृ. २४३ परि ६९) अपवादशब्दोऽत्र बाधकपरः ।

**क्वचिदेकदेशोऽप्यनुवर्तते इति न्यायः** (परिभाषा १८) । पूर्वतः एकयोगि-निर्दिष्टानाम् इति पदमनुवर्तते । एकत्र अर्थे योगः संबन्धः । तेन निर्दिष्टयोः समुदायाभिधायिद्वंद्वनिर्दिष्टयोः इत्यर्थः इति 'पक्षात्तिः' इति सूत्रे कैयटः ।

**क्षीरं विहायारोचकग्रस्तः सौवीररुचिमनुभवति इति न्यायः ।** यथा सुखा-भिव्यक्तिरिति पक्षं परित्यज्य दुःखनिवृत्तिरेव मुक्तिरिति स्वीकारः प्रकृतन्याय-मनुभावयतीति सर्वदर्शनसग्रहे अक्षपादीयेऽभिहितः । साहस्री. ६६५.

**क्षीरदग्धजिह्वान्यायः** । यथा तप्तक्षीरेण दग्धजिह्वः कश्चित् तक्रं फूत्कृत्य पिबति, तथा दैवात् सुखकारिवस्तुनः प्राप्तौ अनिष्टविवक्षायां बोध्योऽयमिति । उक्तं च—'क्षीरेण दग्धजिह्वस्तक्रं फूत्कृत्य पामरः पिबति । दम्भिनमवलोक्य जनस्तद्वन्मां शङ्कते त्वया त्यक्तम् ॥' इति भक्तवाक्यं भगवन्त प्रति । साहस्री. ४७३.

**क्षीरभोजन्यायः** । यस्य क्षीरेण भोजनमुदितं भवति, यदि तस्मै सशर्करं दीयते, न कश्चिद्विरोधो भवति । सशर्करमपि तत् पय एवेति । भा. १२।१।१।४

**क्षीराब्धिवासिक्षीरकामन्यायः** । अयं यत्राऽऽप्तकामोऽपि स्वीयजन-तुष्टि-चिकीर्षया किञ्चिद्याचेत तद्विषये प्रचरति । यथा क्षीरार्णवनिवासी श्रीकृष्णो गोष्ठे गोपीः क्षीरं याचते स्मेति शंकरविजये । साहस्री. ८८७.

**क्षीरोदकन्यायः** । यथा क्षीरपूर्णे घटे कतिचित् अब्बिन्दवः प्रक्षिप्ताः सन्तः क्षीरग्रहणेनैव गृहीता भवन्ति । नहि क्षीरग्रहणात् अब्बिन्दुग्रहणं परिशिष्यते, एवं ब्रह्मणा तत्कार्यैश्च अव्यतिरिक्तदेशकालत्वात् गृहीतमेव ब्रह्मग्रहणेन नभो भवति । शां. भा. पूर्वपक्षे २।३।६ ब्रसू.

**क्षीरोदसंपृक्तन्यायः** । अयं न्यायः 'सन्यङोः' (पा. ६।१।९) इति सूत्र-महाभाष्ये अभिहितः । अस्यायमर्थः । संमिश्रत्वान्न ज्ञायते कियत् क्षीरम्, कियदुदकमिति । कस्मिन् वा अवकाशे क्षीरम्, कस्मिन् वा अवकाशे उदकमिति ।

**क्षुत् स्वादुतां जनयति इति न्यायः** । तीव्रायां क्षुधि कदन्नमपि स्वादुतया भक्ष्यते इत्यर्थः । साहस्री. ४११.

**खरीविषाणन्यायः** । असद्वस्तुसंभावनविवक्षायामयं प्रचरतीति स्पष्टम् । साहस्री. ८८८.

**खलमैत्रीन्यायः** । खलस्य मैत्री आदौ गाढाऽपि क्रमेण ह्रसति, अन्ते च नश्यति यथा, तद्वत् इति । संग्रहः ।

**खलेकपोतन्यायः** । उक्तं च—'वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत् पतन्ति । तथैव सर्वे युगपत् पदार्थाः परस्परेणान्वयिनो भवन्ति ॥' इति न्यायः । अत्र वृद्धयुवशिशुभिः कपोतैश्चिरतरचिरसन्निहितकालोक्तानां पदार्थानां साम्यं बोध्यम् । यत्र पदार्थानां युगपदन्वयस्तत्रास्य प्रवृत्तिरिति । साहस्री. १८३.

**गगनरोमन्थन्यायः** । असंभवद्वस्तुनि व्यर्थप्रयत्नकरणे प्रवर्तते । पशूना-मुद्गीर्य चर्वणं रोमन्थ उच्यते । साहस्री. ६६६.

**गगनारविन्दन्यायः** । अयमत्यन्ताभावदृष्टान्ते प्रवर्तते । गगनकमलं हि यथा नास्त्येव तद्वदिति । साहस्री. ७१५.

**गंगां प्रविश्यानेका नद्यो गंगाग्रहणेन गृह्यन्ते इति न्यायः** । (तन्मध्यपतित-स्तद्ग्रहणेन गृह्यते इति न्यायोदाहरणरूपोऽयं न्यायः । के) भूतिः, पृ० २९८.

**गजघटान्याय:** । यथा 'मदान्धसिन्धुरघटा' (गङ्गाष्टकम्) । यथा च 'यत्रैषा मेघनीला चलति गजघटा राक्षसस्तत्र यायादेतत् पारिप्लवाम्भःप्लुतितुरगबलं धार्यतां राक्षसेन । पत्तीनां राक्षसोऽन्तं नयतु बलमिति प्रेषयन् मह्यमाज्ञामज्ञासीत् स्नेहयोगात् स्थितमिह नगरे राक्षसानां सहस्रम् ॥' इति मुद्राराक्षसनाटके २ अङ्के । साहस्री. २०८.

**गजभुक्तकपित्थन्याय:** । यथा गजभुक्तं हि कपित्थफलं तदुदरादभग्नमेव नि:सरति, तच्च भग्नं सत् मज्जाशून्यं प्रक्षालितमिवाभातीति प्रसिद्धम् ।

**गड्डलिकाप्रवाहन्याय:** । यथा गड्डलिकानामवीनां गणादेका चेत् कूपे पतिता, तदा वार्यमाणा अपि सर्वास्तत्र पतन्तीति तथा प्रकृतेपि । (गड्डलिका इत्यपि पाठ:) । साहस्री २३.

**गणपतिन्याय:** । 'गण: प्रमथसंख्यौघे चण्डसैन्यप्रभेदयो:' इति मेदिनी ।

**गतानुगतिको लोको न लोक: पारमार्थिक: इति न्याय:** । यथा केन चिद्ब्राह्मणेन कस्माच्चित् पुरुषात् श्रुतं यत् कस्मिंश्चित् ग्रामे कश्चिद्दाता धनाढ्य: प्रतिब्राह्मणं रौप्यकमण्डलुं ददातीति ।

**गन्धर्वनगरन्याय:** । गन्धर्वाणां नगरमिव गन्धर्वनगरम् ।

**गर्दभेनापनीतं हि हरेन्नाश्वश्चिरादगत: इति न्याय:** । वा० १।३।३।३ पृ० १७८ । (गर्दभेन प्रथममागतेन घासादौ पदार्थे अपनीते सति गर्दभात् श्रेष्ठतमोपि अश्व: पश्चादागतश्चेत् नासौ घासादिपदार्थं लभेत । तथा अन्यत्रापि इति । के.

**गर्दभरोमगणनान्याय:** । वैयर्थ्यबोधकोयम् । यत्र क्रिया निष्फला तत्रास्य प्रवृत्ति: । साहस्री. ३०५.

**गलेपादुकान्याय:** । यथा कस्यचित् गृहस्थस्य गृहे अन्नार्थित्वच्छलेनागतो निषण्णश्च कश्चिद्विट: । स्तेनं तत्त्वतो ज्ञात्वा गच्छगच्छेति पुन:पुनरुच्यमानोपि यदा धौर्त्येन स्वेच्छया गमनं न स्वीकरोति, तदा पादुकासहितं पादं गले निधाय तोदयित्वा च बलान्नि:सार्यते, तथा प्रकृतेपि । साहस्री. ३८४.

**गवाक्षेभ्यो नि:सृतदीर्घप्रभान्यायेन** श्रोत्रादिभिर्द्वारैर्नि:सृता साभासा बुद्धि: सदा प्रज्वलति । उपदेशसाहस्री । पद्ये १५।२६ रामतीर्थ: ।

**गिरिमुत्पाट्य मूषिका उद्धृता इति न्याय:** । यत्र कृतेपि बह्वायाससाध्ये कर्मणि, तुच्छफलोपलब्धि: तत्रायं प्रवर्तते इति । तथा चोक्तं पञ्चतन्त्रे 'खनन्नाखुबिलं सिंह: पाषाणशकलाकुलम् । प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत् ॥' साहस्री. ६३२.

**गुडजिह्विकान्याय:** । यथा कटुताभीत्या निम्बादिकटुद्रव्यपानमकुर्वाणस्य माणवकस्य जिह्वायां गुडलेपनं कृत्वा निम्बादि कटुद्रव्यं पाययन्ति पित्रादय:,

तथा अर्थवादवाक्यानि कष्टे कर्मणि अप्रवर्तमानं पुरुषं स्वर्गाद्यक्षय्यादिकं श्रावयित्वा तस्मिन् प्रवर्तयन्तीति संक्षेपः ।

**गुडश्लेष्मन्यायः** । यथा गुडः श्लेष्मिणः श्लेष्माणं वर्धयित्वा पश्चात्तं श्लेष्माणं निपातयति, तद्वत् प्रथमं विश्वासमुत्पाद्य शत्रून् संवर्ध्य विनाशने प्रवर्तते इति । तथोक्तम् 'उच्छेद्यमपि विद्वांसो वर्धयन्त्यरिमेकदा । गुडेन वर्धितः श्लेष्मा सुखं वृद्ध्या निपात्यते ॥ इति । साहस्री. ६३०.

**गुणिनि गुणज्ञो रमते इति न्यायः** । स्पष्टार्थः । साहस्री ८४२.

**गुर्वपि विरहदुःखमाशाबन्धः साहयति । इति न्यायः** । अयमभिज्ञान-शाकुन्तले चतुर्थाङ्के (१५) उक्तः । तथाहि, "एसा हि पियेण विणा गमेइ रअणि विसाअदीहअरम् । गुरु अपि हि विरहदुःखं आसाबन्धो सहावेदि ।" इति प्राकृतगाथा । अस्याः संस्कृतं यथा 'एषापि प्रियेण विना गमयति रजनिं विषाद-दीर्घतराम् । गुर्वपि विरहदुःखमाशावन्धः साहयति ॥ इति । साहस्री. ७८६.

**गुरुकृतदण्डो न दोषावह इति न्यायः** । अयम् 'वाक्यादेरामन्त्रितस्यासूया-संमतिकोपकुत्सनभर्त्सनेषु' (पा० ८।१।८) इति सूत्रमहाभाष्ये ध्वनितः ।

**गोक्षीरन्यायः** । गोरपि क्षीरं श्वदृतौ स्थितं दुष्टमेव यथा तद्वत् । स्वरूपेण धर्मस्यापि अहिंसादेः गोक्षीरन्यायेन शाक्यसम्बन्धे सति अधर्मत्वप्रसंगात्' । वि० १।३।४ वर्णकं २ ।

**गोदोहनन्यायः** । भा० ४।१।२।२ वर्णकः २ काम्यसूक्तानां महाव्रते आज्य-शस्त्रत्वेन यथोक्तानां गोदोहन्यायेन पुरुषार्थत्वमेव न क्रत्वर्थत्वम् । तैआसा. १।१।१।१६ ।

**गोन्यायः** । गवां न्यायः स्वाधीनतया शिक्षितत्वम् ।

**गोपगृहिणीन्यायः** । अयं पद्येनोपनिबद्धः । तथाहि—हत्वा नृपं पतिमवाप्य भुजङ्गदष्टं देशान्तरे विधिवशाद्गणिकास्मि जाता । पुत्रं स्वकं समधिगम्य चितां प्रविष्टा शोचामि गोपगृहिणी कथमद्य तक्रम् ।

**गोबलीवर्द न्यायः** । गामानय बलीवर्दं चानय इत्यत्र गोपदेनैव बलीवर्दबोध-सिद्धौ बलीवर्दपदं दुर्दम्यत्वज्ञापनपरत्वेन सफलमिति ।

**गोमयपायसन्यायः** । 'गोमयं पायसम्, गोविकारत्वात् संमतवत् इति अनुमानं यथा प्रत्यक्षेण बाध्यते । तद्वत् । संग्रहः ।

**गोमयवृश्चिकन्यायः** । 'अचेतनत्वेन प्रसिद्धेभ्यो गोमयादिभ्यः चेतनानां वृश्चिकादीनाम् उत्पत्तिः दृश्यते, तेन उपादानोपादेययोः अत्यन्तसादृश्यं नापेक्ष्यते । तस्मात् जगद्-ब्रह्मणोः चेतनाचेतनत्वेन वैलक्षण्येपि उपादानोपादेयभावः स्यात् । इदं (२।१।५६ अ० सु०) शांकरभाष्ये विस्तरेणोक्तम् । के०

**गोमहिषन्यायः** । गोमहिषयोर्नैमित्तिको विरोधः । सहवासेन तु मित्रताापि

भवति तद्वदन्यत्र । संग्रहः ।

**गोमहिषीन्यायः ।** यथा गवादेर्महिष्यादेश्च न केनचिन्निमित्तेन अन्योन्यं मैत्री भवति, न केनचिच्च विरोध इति, तथा प्रकृतेपि । गोमहिषीन्यायस्य शब्दभेदोयम् । साहस्री. ३९८.

**गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम् । वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥'** (वा. १।३।३।४।६ पृ. २२३) इति न्यायेन वाक्यभेदत्रयाभ्युपगमात् (गौण्या लक्षणया वापि वाक्यशेषेण वा पुनः इति पूर्वार्धे पाठान्तरं परिमले ३।३।२९।५२ ब्र. सू.)

**घटायोन्मीलितं चक्षुर्नहि परं न पश्यति** इति न्यायेन तत्र चारितार्थ्येपि कल्पितस्य अग्रहणे किं मानम् ? भूतिः, पृ. ५६.

**घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः इति न्यायः ।** अस्य न्यायस्याल्पशक्तिमतो बहुशक्तिमता सह विग्रहविवक्षायामवतार इति । साहस्री. ८८५.

**घटाकाशन्यायः** उपाध्युपधेययोः परस्परपरिच्छेदकत्वे अन्यतरस्यापि पूर्णत्वं न युज्यते अत उपाधिरपि अध्यस्त एव । तथा चाधिष्ठानाध्यस्तयोर्विषमसत्ताकत्वात् न परस्परपरिच्छेदकत्वम्, किन्तु इतरेतरतिरोधायकत्वमेवास्ति । सनत्सु. नी. ४।३, घटाकाशन्यायेन एकोप्यात्मा भिन्नोपाधियोगे अनेको न भाति । १।२०.

**घटप्रदीपन्यायः ।** नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरम्' इति दक्षिणमूर्तिस्तोत्रीयचतुर्थश्लोके समायातः । संग्रहः ।

**घटीयन्त्रनयः ।** घटीन्यायः । 'स्वल्पैर्हि कर्मभिर्ज्ञानैरपि प्राप्ताः पुनः पुनः । घटीयन्त्रनयाज्जन्ममरणे नैव शाम्यतः ॥' स्कंदपु. महेश्वरखण्डे अरुणाचलमाहात्म्ये उत्तरार्धे २।४.

**घटीयन्त्रस्थितघटभ्रमणन्यायः** । अयं न्यायः स० द० सं. पातञ्जलदर्शनेभिहितः । तथाहि, 'श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः' इति । स च वायुः सूर्योदयमारभ्य सार्धघटिकाद्वयं घटीयन्त्रस्थितघटभ्रमणन्यायेनैकैकस्यां नाड्यां भवति । एवं सति अहर्निशं श्वासप्रश्वासयोः षट्शताधिकैकविंशतिसहस्राणि जायन्ते इत्यन्यत्र विस्तरः । साहस्री. ६२६.

**घट्टकुट्या प्रभातम् इति न्यायः ।** नन्वेवं प्रकरणान्मात्रानृतवदननिषेधवाक्यार्थकथने अनारभ्याधीतहिंसानिषेधवाक्यस्य अनया प्रक्रियया इत्थमर्थो भवति ।

**घुणाक्षरन्यायः ।** घुणः कीटभेदः । यथा घुणेन भक्षिते काष्ठादौ ह्यकस्मात् ककारादिसदृशच्छिद्रेषु सत्सु घुणेनाक्षराणि निर्मितानि इति मूर्खः कल्पते तथा प्रकृतेपि । साहस्री. ८२.

**घोटारूढस्य विस्मृतो घोटः इति न्यायः** । बृहती. पृ. १३५। लोके शून्यमनः-कथासु श्रूयते घोटारूढस्य भवतो विस्मृतो घोटः इति । विस्मृतः चित्तादपक्रान्तः ऋजु. पृ. १३५.

**चक्रकन्यायः** । अन्योन्याश्रय एवावर्तितः चक्रकं भवति । तच्च स्वापेक्षापेक्ष्य-पेक्षितवरूपमिति । अस्यापि हि आत्माश्रयवत् त्रैविध्यमिति । साहस्री. ६११ ।

**चक्रनाभिन्यायः** । मोक्षधर्मे जनकयाज्ञवल्क्यसंवादे (११८।६ टीकायाम्) अव्यक्तमव्याकृतमायाशबलं हार्दाकाशः इति पर्यायाः त्रिगुणात्मकस्य कारणस्य ब्रह्मणो वाचकाः । 'चक्रे नाभिरिवाश्रिता' इति प्रयोगदर्शनात् । तत्र विशिष्टे निकृष्टं चक्रनाभिन्यायेनश्रितं वस्तु अव्यक्तस्थम् । 'किमव्यक्तं परं ब्रह्म तस्माच्च परतस्तु किम्' इति पृष्टः ते त्वया अहमिति । साहस्री. ७६१.

**चक्रभ्रमणन्यायः** । यथा चक्रभ्रान्तिहेतौ कुलालव्यापारे निवृत्तेपि भ्रान्ति-क्षयो वेगक्षयादेव भवति, तथा प्रकृतेपि । (अज्ञाने नष्टेपि जीवन्मुक्तिः । संग्रहः) साहस्री. २७५.

**चक्रवाकीचक्रवाकन्यायः** । श्रूयते हीमौ जलचरपक्षिदम्पती दिने संपृक्तौ सन्तौ यथेच्छं नदीतीरे विहरतः, सूर्यास्तवेलायामन्यतरः उड्डीय नद्याः परे पारे गत्वा शब्दायते, इहत्यस्तदनुकृत्योड्डीय परे पारे याति, परस्थः अवारतीरे आयाति, पुनः परस्थः अवारमवारस्थः पारं यात्यायाति चैवं रात्रिपर्यन्तं कुरुतः । दिने पुर्नमिलतो रात्रौ वियुञ्जाते इत्येवं विषयविवक्षायामयमवतरतीति । साहस्री. ४५३.

**चक्षुर्दीपन्यायः** । यथा अन्धकारावृतघटादिदर्शने चक्षुर्दीपौ उभावपि अपेक्ष्येते, दीपदर्शने तु तथा न, किन्त्वेकं चक्षुरेवापेक्ष्यते तथा 'ब्रह्मण्यज्ञान-नाशाय वृत्तिव्याप्तिरपेक्षिता । स्वयंस्फुरणरूपत्वान्नाभास उपयुज्यते ॥' इति (पञ्चदश्याम्) । साहस्री. ४५३.

**चतुर्वेदविन्न्यायः** । यथा गोहिरण्यादिरूपं बहुधनं चतुर्वेदविदे देयं भवतीति कस्यचिद्दातुर्वचनं श्रुत्वा कश्चिन्मुग्धो 'वेदाश्चत्वारः' इत्यहं जाने, मह्यं देयमिदमिति वदन्न तु लेभे तत्, प्रत्युतोपहास्यतां प्राप्तः, तथा यः सच्चिदानन्द-रूपं प्रत्यगभिन्नं ब्रह्मेत्यादिशब्दमात्राभिज्ञस्तदर्थाभिज्ञो वा तत्त्ववित्त्वाभिमानेन सद्गतिमिच्छति, न स तामेति उपहसनीयश्च भवतीति ज्ञेयमिति । साहस्री. ७८.

**चतुर्व्यूहन्यायः** । चत्वारो व्यूहाः, विभागा इति यावत् ।

**चन्द्रातपमलन्यायः** । सितेतर इव त्वेषपक्षश्चित्रं न कर्षति । चन्द्रा-तपमलन्यायप्रवासमलिनीकृतः ।

**चन्द्रचन्द्रिकान्यायः** । यथा सर्वदेवकारणस्य रुद्रस्य या शक्तिश्चन्द्रचन्द्रिका-न्यायेन तदुद्बोधरूपिणी स्वाधीनवल्लभेति प्रसिद्धा, सैव भवानीति । साहस्री.

**चन्द्रज्योत्स्नान्यायः**। 'चन्द्रिका कौमुदी ज्योत्स्ना' इति कोशात्तथा।

**चम्पकपटन्यायः**। यथा दूरीकृतेष्वपि पटनिष्टचम्पकपुष्पेषु पटे उपलभ्यमानो गन्धो निराश्रयगुणावस्थायोगात् स्वाश्रयं द्रव्यं कल्पयति, तथा प्रकृतेपि। साहस्री. २८६.

**चर्मतन्तो महिषीं हन्तीति न्यायः**। सप्तमी हि निमित्ते निमित्तं च फलम्। तथा च चर्मतन्त्वर्थमित्यर्थः।

**चातकजीमूतन्यायः**। जीमूतो मेघः। यात्राभीष्टसिद्धौ सत्यां बहुकालिक्यपि तत्तृष्णोपशाम्यति, तत्रास्य प्रवृत्तिरिति।

**चित्रानलन्यायः**। चित्रगतः अनलो यथा न दहति, तथा जीवन्मुक्तगतः संसारः तं न तापयति। साहस्री. २९१.

**चित्रामृतन्यायः**। चित्रानलन्यायवत् अर्थः। अयं सुखविषये इति विशेषः। साहस्री. २९०.

**चित्रपटन्यायः**। उक्तं च पञ्चदश्यां चित्रदीपे—'यथा चित्रपटे दृष्टं ह्यवस्थानां चतुष्टयम्। परमात्मनि विज्ञेयं तथाऽवस्थाचतुष्टयम्॥ १॥

**छत्रिन्यायः**। यथा लोके छत्रिणो यान्तीति प्रयोगे सपरिवारे राज्ञि गच्छति छत्र्यच्छत्रिसमुदाये छत्रिशब्दो वर्तते। अयं न्यायः शारीरकसूत्रशाङ्करभाष्ये १।२।११, १।२।१२, ३।३।३४ सूत्रत्रयविवृतौ व्यवहृतः।

**छायोपसेवनन्यायः**। 'यावद्गोस्तनपानाच्च यावच्छायोपसेवनात्' इत्यारण्यके। छायोपसेवनं प्रतिमाद्वारको भोगः शत्रुकृतानां स्वदेहप्रतिमायामपि कण्टकेन तुन्नो व्यथते। मोक्षधर्मे नीलकण्ठः १।१.

**छिद्रेष्वनर्था बहुलीभवन्ति इति न्यायः**। यत्र दुःखाद्दुःखान्तरप्राप्तिरिति विवक्ष्यते, तत्रायमवतरतीति। उक्तं च 'एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य। तावद् द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति॥' इति।

**छिन्ने पुच्छे लूने कर्णे श्वा श्वैव नाश्वो न गर्दभः इति न्यायः**। प्रागपि जीवस्य ब्रह्मत्वे श्रवणमननादीनां वैफल्यं छिन्ने० इति न्यायात्। श्रीकर. २।१।९ ब्रसू.

**जलानयनन्यायः**। यथा जलमानीयतामित्युक्ते अचोदितमपि पात्रानयनं जलानयनेऽन्तर्भवतीति, तथा प्रकृतेऽपि। साहस्री. १६.

**जलालोकपवनन्यायः**। जागरे गजादिमत्सु देशेषु रथाद्युपलम्भस्य च स्वप्नार्थानां जागरितार्थानां च जलालोकपवनन्यायेन मूर्तत्वेऽपि मिथःप्रतिघातकत्वाभावकल्पनयोपपत्तेः (जलालोकपवनानां परस्परप्रतिघातकत्वं यथा नास्ति)। परिमल. ३।२।१५-६ ब्रसू.

**जलाशयतरंगचन्द्रन्यायेन** एक एव शुद्धः आत्मा जीवरूपेण बहुधा दृश्यते। सनत्सुजातीय. नीलकण्ठः ६।२०.

**जलौष्ण्यन्यायः**। यथा 'शीतस्पर्शवत्य आपः' इति लक्षणतो जले स्वाभाविकं शैत्यं वर्तते, उष्णत्वं तु तेजःसंयोगादिति। एवं चायं न्यायः अन्यासाधारण-धर्मस्य अन्यत्रारोपविवक्षायां प्रवर्तते इति भावः। साहस्री. ३७६.

**जलकतकरेणुन्यायः**। अयं बाध्यं प्रबाध्य स्वयमेव बाधकनिवृत्तिविवक्षायां प्रवर्तते।

**जलचन्द्रन्यायः**। यथा जलपात्रेषु चन्द्रप्रतिविम्बानि चन्द्राद् दूरस्थानि भिन्नानि च नानाविधानि दृश्यन्ते। वस्तुतस्तु नैवम्, एवंविषयव्यवस्थायामयं प्रवर्तते।

**जलतरंगन्यायः**। यथा जलगुणा माधुर्यद्रवशैत्यादयो जलस्योपरि वातवशात् तरङ्गे उत्पन्ने सति जलविवर्तत्वेन जलनिष्ठे तस्मिंस्तरङ्गे प्राप्य तरङ्गो-त्पत्त्यनन्तरं तरङ्गविवर्तत्वेन तरङ्गनिष्ठे फेनेऽप्यनुगताः।

**जलतरंगबुद्बुदन्याय**। चेतनाचेतनप्रपञ्चस्य जलतरङ्गबुद्बुदन्यायेन तत्रै-वोत्पत्तिलययोः श्रवणात् 'एष योनिः सर्वस्य प्रभवाप्ययो हि भूतानाम्' इति तदन्यत्वात् सर्वस्येति भाव इत्युक्तमिति। साहस्री. ७४३.

**जलताडनन्यायः**। यथा जलस्य ताडनं व्यर्थं तद्वत् अन्यत्रापि। साहस्री. २६७।

**जलतुम्बिकान्यायः**। यथा पङ्कलिप्ता तुम्बिका नदीसमुद्रादौ मज्जन्ती पङ्क-क्षये अवकाशे आगत्य तिष्ठति, तथा जीवो देहक्षये लोकादाकाशे गत्वा तिष्ठति। अयमेव तस्य मोक्ष इति दिगम्बरजैना मन्यन्ते। अनेनैव न्यायेन रेफस्योर्ध्वंगम-नमिति (सारस्वत-) वैयाकरणाः। साहस्री. ८.

**जलतैलन्यायः**। जले प्रक्षिप्तस्य तैलस्य यथा जलोपरि गमनं भवति, तथा कर्मबन्धमुक्तस्य जीवस्य लोकाकाशात् उपरि गमनं भवति, स एव मोक्षः जैनमते। साहस्री. ८.

**जलनिमज्जनन्यायः**। व्यवहारे दिव्यविशेषोऽयम्। संग्रहः।

**जलबिन्दुनिपातन्यायः**। यथा जलकणिकापातेन घटः क्रमशः पूर्यते, एवं विद्यानां धर्मस्य धनस्य च क्रमशः संचयो भवतीति विषयेऽस्य प्रवृत्तिरिति। उक्तं च — 'जलबिन्दुनिपातेन क्रमशः पूर्यते घटः। स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च॥' इति। साहस्री. ६४८.

**जलमन्थनन्यायः**। यथा जलस्य मन्थनं व्यर्थम्, न नवनीतप्रदम्, तद्वदपि। साहस्री. २६८.

**जलमौक्तिकन्यायः**। अयं देशकालपात्रश्रद्धाविशेषादल्पमपि महत्तत्वं

जलमौक्तिकन्यायेन प्राप्नोतीति दर्शनादिति। म. भा. अनु. १२ अ. श्लो.६ टीकायामुक्तः इति। साहस्री. ७६३.

**जलूकान्यायः**। सा हि स्तनलग्नाऽपि क्षीरमगृहीत्वा रक्तमेव गृह्णाति तथा खलः। संग्रहः।

**जहदजहत्स्वार्थवृत्तिन्यायः**। यत्र वाच्यैकदेशत्यागेन एकदेशान्वयः, तत्रायं प्रवर्तते। यथा 'सोऽयं देवदत्तः' इत्यादौ तत्तांऽशस्येदानीमसम्भवात् हानम्, इदन्तांऽशस्य संभवादहानमिति भावः। साहस्री. ४३७.

**जहत्स्वार्थवृत्तिन्यायः**। यथा जहति पदानि उपसर्जनीभूतानि स्वार्थं यस्यां सा जहत्स्वार्था। परार्थाभिधानं वृत्तिः। परस्य शब्दस्य योऽर्थः तस्याभिधानं शब्दान्तरेण यत्र सा वृत्तिरित्यर्थः।

**जागरणन्यायः**। ज्योतिष्टोमे सौमिकेन दीक्षाकालीनेन जागरणेन दार्शिकजागरणस्य न प्रसङ्गः।

**जाग्रद्वासनानुयुक्तः स्वप्नः इति न्यायेन** स्वप्नस्यापि जाग्रद्वासनाहेतुत्वोपदेशात्। श्रीकर. २।२।२६ ब्रसू.

**जीवितोपि (जीवन्नपि) न जीवेत् स यदि लोकेन दूष्यते इति न्यायः**। स्पष्टार्थः। साहस्री. ६०२.

**ज्वलितं न हिरण्यरेतसम्, चयमास्कन्दति भस्मनां जनः। इति न्यायः**। (भारविः २।३०) जनः प्रदीप्तमग्निं नास्कन्दितुं शक्नोति भस्मनां चयं कामम् आस्कन्दति। तस्मात् पुरुषेण तेजस्विना भाव्यम्, न मृदुनेति न्यायार्थः। साहस्री. ६६८.

**टिट्टिभन्यायः**। अयं पञ्चतन्त्रे विवृतः। तथाहि, कस्यचित् टिट्टिभाख्यपक्षिणोण्डानि स्वतटस्थानि समुद्रः स्ववीचिना अपजहार। स च पक्षी स्वसाहसेनैनं शोषयिष्यामीति प्रवृत्तो भार्यादिभिर्बहुधा वार्यमाणोपि नोपरराम, प्रत्युत तानपि वव्रे। तांश्च पतनोत्पतनाभ्यां बहुधा क्लिश्यतः सर्वानवलोक्य कृपालुर्नारदस्तत्समीपे गरुडं प्रेषयामास। ततस्तत्पक्षवातेन शुष्यन् समुद्रो भीतोण्डान्यानीय पक्षिणे ददाविति।

**टिट्टिभाण्डन्यायः**। टिट्टिभन्यायार्थक एवायम्। संग्रहः।

**तक्रकौण्डिन्यन्यायः**। अन्यथा 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात्, तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यसंभवात् (शेखर० पृ० २४१)।

**तण्डुलभक्षणन्यायः**। साहस्री ११६। दिव्यविशेषोयम्। तत्राह मिताक्षरायां पितामहः (२।११३) 'तण्डुलानां प्रवक्ष्यामि विधिं भक्षणनोदितम्। चौरे तु तण्डुला देया नान्यस्येति विनिश्चयः।

**तस्मिन् विदिते सर्वं विदितं भवतीति न्यायः।** अयं श्रीमद्वल्लभाचार्यैः श्रीमद्भागवतस्य सुबोधिनीटीकायामुदाहृतः। अयमर्थः 'विदुरो मैत्रेयसमीपं गत्वा स्वस्य सर्वज्ञतासिद्ध्यै बहु पृष्टवान्। तत्र तस्मिन्विदिते सर्वं विदितं भवतीति न्यायेन भगवच्चरित्रे ज्ञाते सर्वं ज्ञातं भवति इत्युक्तमिति। साहस्री. ५८६.

**तद्गुण उपलभ्यते इति न्यायः।** अयं 'उच्चैरुदात्तः' (पा० 1।2।29) इति सूत्रमहाभाष्ये उक्तः। तद्यथा—द्वयोः रक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुण-मुपलभते। बदरपिटके रक्तको लोहकंसः तद्गुण उपलभ्यते' इति। (तस्य गुण इव गुणो यस्य स तद्गुणः) साहस्री. 617.

**तत्परातत्परविरोधे तत्परं बलवत् इति न्यायः।** सविशेषत्वसूचकानां निर्विशेषत्वसूचकानां च वचनानां बहुत्वेऽपि ब्रह्मणो निर्विशेषत्वमेवेत्यत्र नियामकः। (तत्परस्य अतत्परस्य च वाक्ययोर्विरोधे तत्परं बलवद् अतत्परस्य तु अन्यथा लापनम् इत्यर्थः) न्यायनि 3।2।5।14 ब्रसू.।

**तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति न्यायः** वैयाकरणानाम् प्रत्याहारा उदाहरणम्। तथा दीक्षणीयायाम् आद्यन्तयोः अग्नाविष्णवोस्तृप्तौ मध्यस्थाः सर्वा देवतास्तृप्यन्ति। ऐब्रासा 1।1।3। तन्मध्यपतितस्तद्ग्रहणेन गृह्यते। 90 परि०। 'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति येन विधिरिति सूत्रे भाष्ये पाठः।

**तत्सामीप्यात्ताच्छब्द्यमिति न्यायः।** गङ्गायां घोषः, कूपे गर्गकुलमित्यादिषु स्पष्टोऽयं न्यायः। (तस्य गङ्गापदार्थस्य प्रवाहस्य सामीप्यात् तीरस्य ताच्छब्द्यं गङ्गापदबोध्यत्वम्। सः गङ्गाशब्दः यस्य तीरस्य, स तच्छब्दः, तस्य भावः ताच्छब्द्यम्)। साहस्री. 486.

**तत्साहचर्यात्ताच्छब्द्यमिति न्यायः।** कुन्तान् प्रवेशय, यष्टीः प्रवेशय इत्यादिषु स्पष्टोयं न्यायः। (पुरुषाणां कुन्त-यष्टिसाहचर्यात् ताच्छब्द्यं कुन्त-यष्टिशब्दबोध्यत्वम्। साहस्री. 487.

**तत्स्थानापन्नः तत्कार्यं लभते इति न्यायः।** अयं 'स्थानिवदादेशोनल्विधौ' (पा० 1।1।56) इतिसूत्रस्थमहाभाष्ये ध्वनितः। तद्यथा—'लोके यो यस्य प्रसङ्गे भवति, लभतेसौ तत्कृतानि कार्याणि। तद्यथा—उपाध्यायस्य शिष्यो याज्यकुलानि गत्वा अग्रासनादीनि लभते' इति। साहस्री. 418.

**तन्तुन्यायः।** अयं समुदायस्य कार्यसाधकत्वविवक्षया प्रवर्तते। यथा तन्तवः-सूत्राणि बहूनि मिलितानि कार्यं साधयन्ति, तथा महान्तोपि मिलिताः स्वकार्यं साधयन्तीति भावः। साहस्री. 994.

**तन्तुपटन्यायः।** तार्किकमते तन्तुषु नष्टेष्वपि क्षणं पटस्तिष्ठति, तथा जीवन्मुक्तिः। अयं कारणनाशे कार्यनाशः इत्यस्यापवादः। संग्रहः।

**तप्तं तप्तेन संबध्यते इति न्यायः** । सत्यपि संनिधाने आकाङ्क्षाया अभावादसंबन्धः । तथा चाभाणकः तप्तं तप्तेन संबध्यते इति (साकाङ्क्षं साकाङ्क्षेण संबध्यते) भामती 3।3।14।25 ब्रसू.

**तप्तपरशुग्रहणन्यायः** । तप्तं परशुम् अश्वत्थपत्रैः सप्तभिः सहिताभ्यां हस्ताभ्याम् उद्धृत्य सप्तपदानि गत्वा त्यजेत् । दाहस्फोटाद्यभावे शुद्धिः अन्यथा बन्धः इति व्यवहारे दिव्यविशेषः । तदिदं तप्तपरशुग्रहणं छान्दोग्योपनिषदि षष्ठाध्याये षोडशे खण्डे पठितम् । के०

**तप्तभ्राष्ट्रतिलन्यायः** । तद्यथा तप्ते भ्राष्ट्रे तिलाः प्रक्षिप्ताः मुहूर्तमपि नावतिष्ठन्ते, एवं प्रकृतान्तरेपि । अयं न्यायः 'स्थानेन्तरतमः' पा० 1।1।50 इति सूत्रमहाभाष्ये स्पष्टः । साहस्री. 598.

**तप्तमाषोद्धरणन्यायः** । दिव्यविशेषोयम् । तथाहि 'सौवर्णं राजतं वापि ताम्रं वा षोडशाङ्गुलम् । चतुरङ्गुलखातं तु मृन्मयं वाथ मण्डलम् ।।, (वर्तुलं पात्रम्) ।

**तमोदीपन्यायः** । तथाहि 'अज्ञानं ज्ञातुमिच्छेद्यो मानेनात्यन्तमूढधीः । स तु नूनं तमः पश्येद्दीपेनोतमत्तेजसा ।।' इति वेदान्तसिद्धान्तमुक्तावली । साहस्री. 669.

**तमःप्रकाशन्यायः** । अयमुपमर्द्योपमर्दकभावे स्पष्टः । प्रकाशः तमसः उपमर्दकः । साहस्री. 401.

**तरक्षडाकिनीन्यायः** । तरक्षः भाषायां 'तरस' इति व्याघ्रविशेषे डाकिनीवाहने प्रसिद्धः । तरक्षे डाकिनी तरक्षडाकिनी । डाकिनी तु श्रीमहाकालीगणविशेषः । यथा तरक्षस्था डाकिनी भयङ्कररूपिणी नानाविधभयंकरकार्याणि करोतीति प्रसिद्धम्, तथा प्रकृतेपि बोध्यमिति । साहस्री. 789.

**तरतमभावापन्नं फलं तरतमभावापन्नसाधनायत्तमिति न्यायः** । यथा विचारपाटवेन यावद्यावद् विवेकदार्ढ्यं भवति तावत्तावद् भ्रमशैथिल्यं जायते इति भावः । साहस्री. 386.

**तरुबीजन्यायः** । तरोर्बीजं बीजाच्च अन्यस्तरुः इति जन्यजनकभावः सदातनः प्रसिद्धः, तद्वदन्यदपि । के०

**तर्काप्रतिष्ठानात् इति न्यायः** । 'नाप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चयः' इति न्यायार्थः ।

**तस्करस्य पुरस्तात्कक्षे स्वर्णमुपेत्य सर्वाङ्गोद्घाटनं प्रतिभातीति न्यायः** । स्पष्टः । अयं स० द० सं० जैमिनीये विस्तृतः । साहस्री. 622.

**तात्स्थ्यात् ताच्छब्द्यम् इति न्यायः** । अयं 'पुंयोगादाख्यायाम्' (पा० 4।1।48) इतिसूत्रमहाभाष्ये अभिहितः । तद्यथा 'मञ्चा हसन्ति, गिरिर्दह्यते'

इति । (तस्मिन् तिष्ठति तत्स्थः, तस्य भावः तात्स्थ्यम् । सः शब्दः यस्य बोधकः सः तच्छब्दः, तस्य भावः ताच्छब्द्यम् । मञ्चस्थाः पुरुषाः मञ्चशब्देन बोध्यन्ते । गिरिशब्देन गिरिस्था वृक्षा बोध्यन्ते) । साहस्री. 484.

**तालसर्पन्यायः** । यथा अवरोहणसमये ऊर्ध्वमुखैस्तालग्रन्थिभिः सर्पोदरविदारणात्तालारोहणं सर्पस्य स्वनाशायेति प्रसिद्धं तथा प्रकृतेपि । साहस्री ३१३.

**तिलतण्डुलन्यायः** । यथा तिलतण्डुलमानयेत्युक्ते असंसृष्टानि तिलानि तण्डुलानि चानीतानि भवन्ति, संसृष्टान्यपि तिलतण्डुलानि वा आनीतानि भवन्ति तथा प्रकृतेपीति । साहस्री. १२६.

**तुल्यायव्ययः** । एकेन व्यापारेण आयवत् व्ययोपि तुल्यो भवति तद्वत् एकेन व्यापारेण यत्र लाभालाभौ समौ प्रसक्तौ तत्रायं प्रवर्तते । संग्रहः ।

**तुल्यबलप्रेषणन्यायः** । तद्यथा लोके द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति । स तयोः पर्यायेण कार्यं करोति । यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतः, तत्र यद्यसौ अविरोधार्थी भवति उभयोर्न करोति । किं पुनः कारणमुभयोर्न करोति, यौगपद्यासंभवादित्यादिकम् 'अन्तादिवच्च' पा० ६।1।८५ इति सूत्रभाष्ये स्पष्टम् । साहस्री. ८३५.

**तुषकण्डनन्यायः** । यथा तुषस्य धान्यत्वचः निस्तुषीकरणमुलूखलादिना व्यर्थं तथा प्रकृतेपि । साहस्री. ४०६.

**तुष्यतु दुर्जनः इति न्यायः** । यत्र प्रतिवाद्युक्तपक्षं दुष्टमपि वादिना प्रौढवादेन अङ्गीकृत्यापि दूषणान्तरं दीयते, तत्रास्य प्रवृत्तिः । साहस्री. १८१.

**तृणारणिमणिन्यायः** । तृणं प्रसिद्धम् अरणिस्तु 'निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इति कोशादग्निसिद्ध्यर्थं निर्मन्थनीये काष्ठविशेषे वर्तते, मणिस्तु अग्निगर्भात्मकसूर्यकान्तपदवाच्याश्मविशेषो गृह्यते अरणिपदसाहचर्यात् । यतस्तृणारणिमणिन्यायेन हेतुत्वान्न व्यभिचार इत्यादि ।

**तृणजलायुकान्यायः** । स्थूलदेहनाशेपि कर्मणा अवबद्धं सप्तदशात्मकं लिङ्गं न नश्यति, किन्तु देहान्तरं प्रविशति तृणजलायुकान्यायेन । तथा च बृहदारण्यके- 'तद्यथा तृणजलायुका तृणस्यान्ते गत्वा अन्यमाक्रम्यात्मानमुपसंहरति' इति । मोक्षधर्मे नीलकण्ठः अ. २०२ श्लो. १९.

**त्यजेदेकम् कुलस्यार्थे इति न्यायः** । यत्रोभयकोटिकसंशये एकत्र बह्वर्थहानिः द्वितीयस्वीकारे तु एकार्थहानिः, तत्र द्वितीयपक्षः स्वीकार्य इति भावः । साहस्री. १२२.

**त्याज्या दुस्तटिनी नदी इति न्यायः** । यथा दुस्तटिनी नदी पतनभयात् त्यज्यते तत्तीरस्थैः अन्यथा तत्पतनं भवत्येव, एवं दुष्टपुरुषसङ्गोपि अवश्यमेव त्याज्यः इति साहस्री. १२२

**त्रिदशामरत्वन्यायः** । मरिष्यमाणानामपि त्रिदशानां (देवानां) दीर्घकाल-

जीवित्वमात्रेण यथा भ्रमरा निर्जरा इति व्यपदेशः तथा रीत्या इत्यर्थः ।

**दग्धेन्धनवह्निन्यायः** । दग्धानीन्धनानि येन सोयमग्निर्यथा स्वयमेव प्रशाम्यतीति । उक्तं च 'यथा निरन्धनो वह्निः स्वयोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्रं स्वयमेवोपशाम्यति ॥' इति साहस्री. २६४.

**दग्धपटन्यायः** । अग्निना दग्धेपि पटे यथा चिह्नं दग्धं न भवति, एवं नष्टेपि सर्वपदार्थे अभिमानो विद्यते एव, एवं विषयेयं प्रवर्तते इति साहस्री. ५९३.

**दग्धपत्रन्यायः** । यथा पत्रस्य दग्धत्वेपि पूर्वाकारेणावस्थानं गृह्यते, एवं यत्र वस्तुनो दाहेपि तदाकारप्रतीतिः तत्रास्य प्रवृत्तिः । साहस्री. २८४.

**दग्धबीजन्यायः** । यथा दग्धस्य बीजस्य नाङ्कुरोत्पादकता एवमविवेकनाशे न संसारवृक्षप्ररोहः इत्येवं यत्र विवक्षा, तत्रास्य प्रवृत्तिरिति । साहस्री. ४६६.

**दग्धरशनान्यायः** । रशना रज्जुः । दन्त्यमध्योपि रसनाशब्दः । यथा दग्धरज्जुः । पूर्ववत् । त्रिगुणत्वादिरूपेण प्रतीयमानापि निःसारा बुध्यते बुधैः । तथा प्रपञ्चं ससारं प्रतीयमानमपि निःसारं वेत्ति बुध इति । साहस्री. २८३.

**दण्डापूपन्यायः** । यथा दण्डनद्धापूपानां दण्डनयात् अवश्यमानयनम्, तथा युगनद्धवाहित्वादीनि इति केचिदाहुः । वस्तुतस्तु एकत्र स्थापितयोर्दण्डापूपयोः यदा अपूपो नास्ति दण्डस्तु मूषकैर्भक्षितो वर्तते । तत्र यथा मूषकाणां दुष्करदण्डभक्षणसिद्धौ तत्सहचरितापूपभक्षणमपि सिध्यति इति ।

**दण्डापूपिकन्यायः** । 'अन्तरङ्गानपि विधीन्' इत्यत्र अपिशब्दः दण्डापूपिकन्यायद्योतनार्थः ।

**दण्डसर्पमरणन्यायः** । यत्रायासं विना साक्षात्सिद्ध्यन्तमर्थमुपेक्ष्य आयासेन परंपरया स एवार्थः साध्यते, तत्रायं न्यायोऽवतरतीति । यथा कश्चित्सर्पं दृष्ट्वा तन्मारणाय दण्डमिच्छन् तमलभमानश्च कुठारं गृहीत्वा तच्छेदाय प्रवर्तते तस्य दण्डगवेषणायासो यथा वृथा, कुठारेणैव सर्पस्य शक्यवधत्वादिति । साहस्री. २५० ।

**दत्ततिलाञ्जलिन्यायः** । यत्र पुत्रादिदत्ततिलाञ्जलिवत् वस्तु उत्सृज्यते, तत्रास्यावतारः इति संक्षेपः । साहस्री. ५६६ ।

**दधिक्षीरन्यायः** । ननु दधिक्षीरन्यायवत् स्वस्वरूपपरित्यागपूर्वकरूपान्तरप्राप्तिरेव परिणामः इति चेन्न । (क्षीरस्वरूपपरित्यागपूर्वकः) दधिरूपेण क्षीरस्य परिणामो भवति न स्वरूपमपरित्यज्य) । श्रीकर. १।४।२६ ब्रसू.

**दधित्रपुसं प्रत्यक्षो ज्वर इति न्यायः** । ज्वरनिमित्तमिति गम्यते । (दधिसहिते त्रपुसे नाम फले भक्षिते धातुवैषम्योत्पत्त्या ज्वरः संजायते) साहस्री. १९४

**दधिपयसी प्रत्यक्षो ज्वर इति न्यायः** । ज्वरजनकत्वात् दधिपयःसमाहारस्य

ज्वरत्वेन व्यपदेशः । संग्रहः.

**दर्पणप्रतिबिम्बन्यायः** । अयं न्यायः सुरेश्वराचार्येण विवृतः । तथाहि 'अन्तरस्मिन्निमे लोका अन्तर्विश्वमिदं जगत् । बहिर्वन्मायया भाति दर्पणे प्रतिबिम्बवत् ॥' इति । साहस्री. ९०६.

**दर्पणमुखावलोकनन्यायः** । अयं यादृशं मुखं दर्पणे पश्यति, तादृशमेव दृश्यते इति विषये प्रवर्तते । साहस्री. ८८६.

**दुःखमेव सर्वं विवेकिनः इति न्यायः** । दुःखे स्रक्चन्दनवनिताऽऽदौ सुखत्वारोपः इत्याद्युक्तं पातञ्जलदर्शने माधवाचार्येणेति । साहस्री. ८७०.

**दुर्जनगर्दभन्यायः** । यथा दुर्जनस्तथा गर्दभः यथा गर्दभस्तथा दुर्जन इत्यर्थविवक्षायामस्य प्रवृत्तिः ।

**दुश्चिकित्स्यव्रणपीडितानां व्रणं शिशमयिषोः शस्त्रग्रहणमिति न्यायः** । यथा व्रणपीडितपुंसः पीडानिवृत्तये शस्त्रेण व्रणं छिनत्ति वैद्यः सतु वैद्यत्वेनोच्यते न तु घातकत्वेन, एवं च निरन्तरदुःखमयसंसारपरिवृत्तिश्रान्तानां जीवानां कञ्चित्कालं विक्षेपविगमसमुल्लसदात्मानन्दानुभवेन विश्रान्तिं संपादयितुकामस्य शिवस्य संहाराय तामसत्वम् । वस्तुतस्तु निरतिशयकरुणाम्बुधित्वमेव शिवस्य । अत एव निदानज्ञस्य भिषजो रुग्णहिंसां प्रयुञ्जतो न किञ्चिदपि नर्घृण्यम् । 'घृणैवात्र प्रयोजिका' इति शिवपुराणे व्याख्यातम् । साहस्री. ९१.

**दृष्टं किमपि लोकेस्मिन्न निर्दोषं न निर्गुणमिति न्यायः** । अयं सर्वत्र गुणदोषौ भवत इति विवक्षायां प्रवर्तते । साहस्री. ५७२.

**दृष्टं हि कर्मणः फलं कृष्यादितः** । (पा० २।२।२५ सूत्रस्था भाष्यपङ्क्तिरियम्) इत्यनेन न्यायेन सामान्यतोदृष्टेन किं होमात् फलं मन्यसे ? इति सिद्धान्तवादी पृच्छति ।

**दृष्टे संभवति अदृष्टकल्पना न न्याय्या इति न्यायः** । प्रत्यक्षप्रमाणसिद्धे कार्ये अप्रत्यक्षकल्पना न कार्या, तस्या अयोग्यत्वादिति ।

**दृष्टे संभवति अदृष्टकल्पनानवकाशः इति न्यायेन** धर्मजिज्ञासाऽधिकरणे अध्ययनविधिः फलवदर्थावबोधरूपदृष्टार्थः इति सिद्धान्तः । बाल. पृ. २.

**दृष्टे सति अदृष्टकल्पना न न्याय्या इति न्यायेन** अर्वाचीनानामेव पुराणोपनिबद्धानां व्यक्तीनां वेदेऽपि ग्रहणम् इति समुचितमेव । सना. ध. प्र. प्रामाण्य. पृ. ६७.

**दृष्टानुसारेण कल्पना इति न्यायेन** नीरूपस्याकाशस्य प्रतिबिम्बासंभवात् । तत्प्रतिबिम्बप्रतीतिस्तु भ्रान्तिरेव । श्रीकर. १।२।२ ब्रसू.

**दृष्टिसृष्टिन्यायः** । अयमपि नीलकण्ठ्यां व्यवहृतः । तथाहि, प्रजापतेः स्वापकाले तत्कल्पितः स्थावरजङ्गमप्रपञ्चः सर्वोऽपि तदीये अज्ञाने अव्याकृताख्ये

लीयते राज्यागमे । तथा दिवसागमे पुनस्तत एव यथापूर्वमाविर्भवति । एवं दृष्टिसृष्टिन्यायेन अस्मत्कल्पितोऽप्ययं वियदादिप्रपञ्चः अस्मत्सुषुप्तौ लीयते अस्मत्प्रबोधे यथापूर्वं प्रादुर्भवतीति । साहस्री. ८१८.

**देवदत्तपुत्रन्यायः** । पितृप्राधान्यविवक्षायामेवमुच्यते, मातृप्राधान्यविवक्षायां तु देवदत्तापुत्र इति । संग्रहः ।

**देवदत्तहननोद्यतहतन्यायः** । यथा देवदत्तहननोद्यतस्य हनने तु देवदत्तस्य भवत्येवोन्मज्जनम्, तथा रामावित्यत्र पूर्वसवर्णदीर्घेण न वृद्धेर्हननम्, किन्तु हननोद्यतसजातीयस्य प्रसक्तिमात्रम्, प्रसक्तस्यैव निषेधात् । साहस्री. ३४.

**देवदत्तहन्तृहननन्यायः** । यथा देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं न भवतीति, तथा अज्ञानबाधके ज्ञाने विनष्टे पुनरज्ञानोदयेन बन्धप्रसङ्गो न भवतीति । अयं न्यायः 'अचः परस्मिन् पूर्वविधौ' १।१।५७ इति सूत्रमहाभाष्येऽपि । साहस्री. ३३.

**देवदत्तापुत्रन्यायः** । यथा नहि देवदत्ताया एव पुत्रः किन्तु देवदत्तस्यापि, मातुः प्राधान्यविवक्षायां देवदत्तापुत्र इत्युच्यते ।

"**देशकालवयोऽवस्थाबुद्धिशक्त्यनुरूपतः । धर्मोपदेशो भवत्ययं वक्तव्यं धर्मपारगैः ॥**" इति न्यायः । स्पष्टोऽर्थः । साहस्री. ५३२.

**देहाधोमुखत्वन्यायः** । यथा वाताद्युपाधिकृतस्य स्वदेहे अधोमुखत्वादेस्तदपगमे अपगमः । साहस्री. ३५३.

**देहकेशन्यायः** । चेतनत्वेन प्रसिद्धेभ्यः पुरुषादिभ्यः विलक्षणानां केशनखादीनामुत्पत्तिर्दृश्यते, तथा चेतनात् ब्रह्मण अचेतनस्यापि जगतः उत्पत्तिः स्यात् । इदं २।१।५।६ ब्रह्मसूत्रशांकरभाष्ये स्पष्टमुक्तम् । साहस्री. ८६१.

**देहलीदीपन्यायः** । अयं न्यायो यथा शालाद्वयमध्यवर्तिदेहलीनिहितदीपः शालाद्वयं स्वकिरणमण्डितं करोतीति दृष्टान्तभूतः । किंच एकाच उपदेशेऽनुदात्तात् इति सूत्रस्थोपदेशपदार्थस्य एकाच्पदार्थे अनुदात्तपदार्थे चान्वय इति । अयं च न्यायः अन्वयविषये एव प्राय उदाह्रियते वृद्धिरिति बोध्यम् । साहस्री. २४६.

**द्रविडप्रणामन्यायः** । लघुना सिध्यतोऽर्थस्य गुरुणा साधनमनर्थकम् । द्रविडब्रह्मचारिणः प्रणामं कुर्वन्तः गोत्रप्रवरादिकं सर्वं पठन्ति, तेन प्रणामो दीर्घो भवति । अत्र लोके 'द्राविडी प्राणायामः' इति पठन्ति तदशुद्धम् । नहि द्रविडानां प्राणायामस्तादृशः । के.

**घटारोहणन्यायः** । साहस्री. ११८ । व्यवहारे दिव्यविशेषेऽयम् । अत्र याज्ञवल्क्यः—'तुलाधारणविद्वद्भिरभियुक्तस्तुलाऽऽश्रितः । प्रतिमानसमीभूतो रेखां कृत्वाऽवतारितः ॥'

**धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात्** । १।३।१।१ ॥ इति न्यायः । एवं तावत्कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम् । अथेदानीं यत्र वैदिकं शब्दमुपलभन्ते, अथ च स्मरन्ति एवमयं पदार्थोऽनुष्ठातव्य एतस्मै प्रयोजनायेति, किमसौ तथैव स्यान्नेति भवति विचारणा । यथा 'अष्टकाः कर्तव्याः' 'गुरुरुपगन्तव्यः' 'तटाकं खनितव्यम्' 'प्रपाः प्रवर्तयितव्याः' 'शिखाकर्म कर्तव्यम्' इति ।

**धर्माधर्मग्रहणन्यायः** । व्यवहारे दिव्यविशेषोऽयम् । संग्रहः । अत्र मिताक्षरा (याज्ञ० २।११३) धर्माधर्माख्यदिव्यविधिः पितामहेनोक्तः—'राजतं कारयेद् धर्ममधर्मं सीसकायसम्' इति प्रतिमाविधानम् । सीसकं वा आयसं वेति विकल्पः ।

**धर्मधर्मिविरोधे च धर्मिणो बलवत्तराः इति न्यायेन** (वा० १।३।३।५) आचमनादीनां बलवत्त्वावगतेः । कौ० १।३।३।६ पृ० ३२.

**धर्मिकल्पनातो धर्मकल्पना वरीयसीति न्यायः** । धर्मकल्पनायाः श्रेष्ठत्वं च लाघवप्रयुक्तमिति । स्पष्टोऽयम् । साहस्री. ४२.

**धर्मिकल्पनातो धर्ममात्रकल्पना लघीयसी इति न्यायः** । ङकारादयो हि धर्मिण एव त्वया पाठ्याः, मया तु उभयपठनीयस्य ईकारस्य कलत्वमात्रं कल्प्यमिति । शब्दकौस्तुभः—१ अन्ते ।

**धर्मिभेदाद्धर्मभेदो लघीयान्** । भेदश्रुत्यवष्टम्भेऽपि 'धर्मि० यान्' इति न्यायेन वागादीनां संभूय देहचालनादिहेतुसामान्यव्यापारसंभवात् न प्राणाख्यं पदार्थान्तरं कल्प्यम् (पूर्वपक्षे) । न्यायनि० २।४।५।९ असू० ।

**धान्यपलालन्यायः** । तत्स्वरूपम् 'शास्त्राण्यधीत्य मेधावी ह्यभ्यस्य च पुनः पुनः । परमं ब्रह्म विज्ञाय ह्युल्कावत् तान्यथोत्सृजेत् ।

**धूल्यन्धकारधूमाभ्रविमुक्तगगनमिति न्यायः** । अयं वस्तुनः अतिशुद्धत्वविवक्षायामवतरति । यथा चोक्तम् 'निर्विकल्पं परं ब्रह्म निर्धूताखिलकल्पनम् । धूल्यन्धकारधूमाभ्रविमुक्तगगनोपमम् ॥' इति । साहस्री. ९११.

**धेनुकिशोरन्यायः** । 'यथा धेनुः किशोरेण' । तद्यथा, कृष्णकिशोरा धेनुः इति । यद्यपि धेनुशब्दो गोधेन्वां रूढप्रवृत्तिः, तथापि अभिधानसामान्यात् अश्वधेन्वामपि भागी इति किशोरेण लिङ्गेन अश्वधेन्वां विज्ञायते । भागित्वात्

नियम्येत 'गुणानामभिधानत्वात् संबन्धादभिधानवद् यथा धेनुः किशोरेण'। भा. ७।४।२।७.

धेनुन्यायः। भूसंज्ञकेकाहे औपदेशिकधेनुदक्षिणया आतिदेशिककृत्स्नक्रतु-दक्षिणायाः बाधः।

नाज्ञातविशेषणविशिष्टबुद्धिर्विशेष्यमुपसंक्रामति इति न्यायः। यथा विशे-षणज्ञानस्य विशिष्टज्ञानहेतुत्वान्न तदन्तरेण तत्सिद्धिः। नहि दण्डज्ञानं विना दण्डीति ज्ञानं संभवति, न चाज्ञातविशेषणं तद्विशेष्यं वशीकरोतीति तदर्थः। साहस्री. १८७.

नानुपहत्य भूतानि भोगः संभवति इति न्यायः। यथा 'अद्रोहेणैव भूता-नामल्पद्रोहेण वा पुनः। या वृत्तिः स परो धर्मस्तेन जीवामि जाजले ॥" इति महाभारतशान्तिपर्वीयवचनं संगच्छते। साहस्री. ५०.

नेष्टं परनिष्पत्तये इति न्यायः। 'मैत्रावरुणाय दण्डं प्रयच्छति इति द्वितीया तु 'तथायुक्तं चानीप्सितम्' इति भविष्यति। शा० ४।२।६ (नेष्टं० इति न्यायेन ईप्सिततमेन अन्यस्य अभिप्रेयमाणत्वायोगात् 'कर्मणा यमभिप्रैति' इति सूत्रे कर्मशब्देन अनीप्सितकर्मण एव विवक्षणीयत्वात् इति भावः। सोम.)

'नैकदा त्रयाणां विवादः' इति न्यायात् एकैकं प्रत्येव अनुमानं वाच्यम्। चन्द्रिका. पृ० ६२८.

नैवाश्रितेषु गुणदोषविचारणा स्यात् इति न्यायः। अयं पद्येनोपनिबद्धः तथाहि 'दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि मित्रावसानसमये विहितो-दयोऽपि। चन्द्रस्तथापि हरवल्लभतामुपैति नैवाश्रितेषु गुणदोषविचारणा स्याद् ॥" इति। साहस्री. ८९९.

नैष स्थाणोरपराधो यदेनमन्धो न पश्यति इति न्यायः। (निरुक्तं १।१६) सनातनध० प्र० प्रमाणप्र० ४६५.

न कदाचित् पवित्रं स्यात् गोक्षीरं श्वदृतौ धृतम् इति न्यायः। असत्पात्रे सदुपदेशोऽपि व्यर्थतां यातीति भावः। साहस्री. ३३५.

न खलु धीमतां कश्चिदविषयो नाम इति न्यायः। अयमभिज्ञानशाकुन्तले चतुर्थेऽङ्के उक्तः। साहस्री. ७८०.

न खलु प्रेम चलं सुहृज्जने इति न्यायः। साहस्री. ९५२.

'न च निमित्तं विधिरपबाधते' इति न्यायात् न नियोगविशेषणस्य साध्यता नियोगस्य साध्यत्वमुपहन्ति, नियोगसाध्यत्वनिमित्तत्वात् नियोज्यविशेषण-साध्यस्य (इति प्राभाकरो ब्रूते)। कणिका. पृ० ३२७.

'न च भिक्षुको भिक्षुकात् याचते' इति न्यायात् न विकृतेर्विकृतिरस्ति, विना वचनम् । वैजयन्ती. ३।८।८०.

**न धर्मवृद्धेषु वयः समीक्ष्यते इति न्यायः ।** तथोक्तं मनुना 'न तेन वृद्धो भवति येनास्य पलितं शिरः । यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः ॥' इति । तन्मूलकोऽयं न्यायः । साहस्री. ९५५.

**न निमित्तं विधिरपबाधते इति न्यायः ।** अप्राप्तांशपूरणेन यत् अवघातादेः नियमानुष्ठानप्रतिपादनम्, तदुपपत्तये तण्डुलादिगतम् अदृष्टं कल्प्यमानं 'न निमित्तं०' इति न्यायेन न दृष्टार्थत्वम् अबाधितम् अधिकरोति। तीता० २।१३।९

**न विदुषामुपदेशो नावकल्पते' इति न्यायेन** उपदेशान्यथाऽनुपपत्त्या मन्वादेः पूर्वज्ञानकल्पना । सु० पृ० ११८.

**न विधौ परः शब्दार्थः इति न्यायः ।** दाप्त्वं दाप्शब्दत्वमेव । गुप्तिज् इत्यादावपि सन्त्वावच्छिन्न इत्येवार्थः, न तु नकारेत्संज्ञकः सः भवतीति 'न विधौ परः शब्दार्थः' इति न्यायात् । भूतिः, पृ० ३२.

**न साहसमनारुह्य नरो भद्राणि पश्यति इति न्यायः ।** स्पष्टार्थोऽयम् । साहस्री. ९३९.

**न सेव्यः केवलो नृप इति न्यायः ।** (किन्तु अमात्योऽपि सेव्यः । अन्यथा विरोधी अमात्यः राजबुद्धिं विपरिवर्त्य केवलं राजसेवकं नाशयेदपि इति भावः । के०) साहस्री. ३९६.

**नहि अकारणोत्कर्षः कार्यमनुविधत्ते इति न्यायः ।** स्वप्ने जागरे च उत्कृष्ट-कलधौतदर्शनात् उत्कृष्टं सुखम्, उत्कृष्टसर्पादिदर्शनाच्च उत्कृष्टं भयादि दृश्यते । विषयस्याकारणत्वे तदुत्कर्षानुविधानं कार्ये न स्यात् । अद्वैत. १।१८।४४५.

**नहि अविद्वान् विहितोऽस्ति ।** (ज्ञाते च वाचनं नह्यविद्वान् विहितोऽस्ति ३।८।८।१२) इत्यनेन न्यायेन यजमानस्येव ऋत्विजामपि अविदुषामधिकारात् । कौ० १।२।४।३५.

**नहि आगमाः सहस्रम् (अपि) घटं पटयितुमीशते इति न्यायः ।** क्षणिकस्य यागस्य यावत्कार्यारम्भम् अवस्थानमपि सर्वप्रमाणविरुद्धं न कल्पयितुं शक्यम् 'नहि आगमाः' । कु० २।१।२।९.

**नहि आढ्ये वदान्येऽवतिष्ठमाने क्षुत्क्षामो भिक्षुको भिक्षुकान्तरं याचितुमर्हति इति न्यायः ।** ननु ऐकादशिनेषु दैक्षस्यैव विध्यन्तो न सवनीयस्य, तस्य स्वयम-धर्मकत्वात् । 'नहि आढ्ये० मर्हति' । सोम० ८।१।७.

**'नहीश्वरव्याहृतयः कदाचित् पुष्णन्ति लोके विपरीतमर्थम्' इति न्यायः।** अयं कालिदासकविना कुमारसंभवे (३।६३) व्यवहृतः। साहस्री. ७२८.

**नहि उपासना वस्तुतत्त्वमपेक्षते किं तर्हि यथावचनमनुष्ठेया इति न्यायः।** (ऐग्रासा० ३।१।८).

**नहि एकमुदाहरणं योगारम्भं प्रयोजयति इति न्यायः।** 'नामि' इति सूत्रे (पा० ६।४।३) महाभाष्ये 'नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति' इत्युक्तम्। तच्च प्रकृतन्यायव्यञ्जकम् इति ज्ञेयम्) साहस्री. ४५०.

**नहि एकमेव सविशेषं निर्विशेषं च भवति इति न्यायः।** अयं न्यायः अद्वैत-कौस्तुभेऽभिहितः। तत्र हि—'सत्यकामः सत्यसंकल्पः' 'अस्थूलमनण्वह्रस्वम्' इत्याद्युभयविधश्रुतिसंभवादुभयलिङ्गं ब्रह्मेति प्राप्ते, अभिधीयते। नोभयलिङ्गं ब्रह्म, एकस्य वस्तुनो द्वैरूप्यायोगात्। नह्येकमेव सविशेषं निर्विशेषं च भवतीति युक्त्या इत्युक्तमिति। साहस्री. ७५४.

**नहि एकं किञ्चिज्जनकम्, सामग्री वै जनिका इति न्यायस्य** अन्यत्र व्यवस्थापितत्वात्। संमतितर्कभागः १ पृ० १२.

**नहि कठोरकण्ठीरवस्य कुरङ्गशावः प्रतिभटो भवति इति न्यायः।** कण्ठीरवः सिंहः। कुरङ्गस्य मृगस्य शावः, शिशुरित्यर्थः।

**नहि करकङ्कणदर्शनाय आदर्शापेक्षा इति न्यायः।** यथा प्रत्यक्षयोग्यं करे स्थितं कङ्कणं प्रत्यक्षेणैव गृह्यते, न तद्दर्शनाय आदर्शापेक्षा। एवं प्रत्यक्ष-सामग्रीसत्त्वे तयैव पदार्थप्रतीतिः, नानुमित्यादिसामग्र्यपेक्षेति विवक्षायामस्य प्रवृत्तिरिति।

**'नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' इति न्यायः।** अयं भगवद्गीताषष्ठाध्यायचत्वारिंशच्छ्लोकोत्तरार्धरूपः स्पष्टार्थः। साहस्री. ७५८.

**'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इति न्यायः।** अयं श्रीमद्-भगवद्गीतातृतीयाध्यायपञ्चमश्लोकपूर्वार्धरूपः पातञ्जले न्यायत्वेन व्यवहृतः। साहस्री. ७२५.

**नहि कृतमुपकारं साधवो विस्मरन्ति इति न्यायः।** स्पष्टः। साहस्री. ६८१.

**नहि क्रियारहितं वाक्यमस्ति इति न्यायेन** 'धेनुर्दक्षिणा' इत्यत्र क्रियापदा-ध्याहारः आवश्यकः। मुरारि० पृ० ११७८.

**नहि त्रिपुत्रो द्विपुत्र (कथ्यते·संग्रहः) इति न्यायः।** त्रित्वस्य द्वित्वव्यापकत्वेऽपि वाक्यस्य सावधारणत्वात् पुत्रत्रयवतः पुत्रद्वयवत्त्वेऽपि न तस्य द्विपुत्रशब्द-

वाच्यता । न्यूनसंख्याव्यवच्छेदकत्वेन त्रिशब्दस्य न यथा द्विपुत्रवाचकतेत्येवं यत्र विवक्षा तत्रास्य प्रवृत्तिरिति साहस्री. २९.

नहि दृष्टेऽनुपपन्नम् इति न्यायः । नहि प्रत्यक्षविषये प्रमाणान्तरान्वेषण-मिति यत्र विवक्षा तत्रास्य प्रवृत्तिः ।

नहि देवदत्तस्य हन्तरि हते देवदत्तस्य पुनरुन्मज्जनं भवति । इति न्यायः । 'अतो हलादेः' इति सूत्रे अद्ग्रहणस्य न तावत् सन्ध्यक्षरादिकं व्यावर्त्यम्, लघुग्रहणेनैव निरासात् ।

नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतुम् इति न्यायः । यथा—तत्तद्विग्रहावच्छिन्नेशध्यानादिस्तुतये तदन्यविग्रहावच्छिन्नेशापकर्ष-वर्णनं केवलायां निन्दायां प्रयोजनाभावादुभयपरत्वे वाक्यभेदप्रसङ्गाच्च । अक्षरार्थस्तु स्पष्टः ।

नहि प्रतिज्ञामात्रेणार्थसिद्धिः इति न्यायः । यथा प्रतिज्ञामात्रकरणेन प्रतिज्ञातोऽर्थो न सिध्यति, किन्तु प्रयासान्तरमेवेति भावः । साहस्री. १४९.

नहि प्रत्यक्षविरुद्धं शास्त्रसहस्रेणापि बोधयितुं शक्यम् इति न्यायः । यथा न जलादेर्नवनीतजनकत्वादिकं बोध्यते इति । साहस्री. ६३२.

नहि प्रमाणस्वरसात् प्रतीयमानं प्रयोजनानुसारेण परित्यक्तुमुचितम् इति न्यायः । कु० २।२।२, पृ० १५८.

'नहि प्रयोजनापेतं वाक्यमुच्चार्यते क्वचित् । प्रयोजनक्षमं नापि पदमा-ख्यातवर्जितम् इति न्यायः ॥' (श्लोवा० १।१।७, ३४६) नोदाहरणमिदम् (शुक्लो गोः) यथाश्रुतमादरणीयम् । यतः पदार्थानामस्ति परस्परं संबन्धः इत्येतावन्मात्रप्रतिपादनपरमिदं भाष्यम्, न तु पारमार्थिकम् ।

नहि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः इति न्यायः । भारविश्लोक-रूपोऽयम् (१।२) । साहस्री. ६६०.

नहि भवति कुण्डं बदरम् इति न्यायः । आधेयभावे एकाश्रयत्वे वा न सामानाधिकरण्यं नहि भवति कुण्डं बदरमिति । साहस्री. ६६०.

'नहि भिक्षुर्भिक्षुं याचते' इति न्यायः । साकंप्रस्थायीयस्य अमावास्या-विकारत्वमेव, तत्र नित्यं सांनाय्यदर्शनात् । दाक्षायणयज्ञविकारत्वं तु नास्ति 'न हि भिक्षुर्भिक्षुं याचते' । वैजयन्ती २।६।५३.

नहि भिक्षुकोऽपि भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके इति न्यायः । कारकाणि फलं त्यक्त्वा भावनायामेवान्वियन्ति इति मीमांसका मन्वते । भूषणसारः, धात्वर्थनिर्णये का० १७.

नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते इति न्यायः। भामती १।१।१ ब्रसू०, पृ० ७४.

नहि भुक्तवान् पुनर्भुङ्क्ते इति न्यायः। उक्तश्चायम् 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' (पा० ६।१।१२७) इतिसूत्रभाष्ये। साहस्री. ४८२.

नहि मरुमरीचिसरसी क्रमशः शुष्यति इति न्यायः। अयं भ्रान्तिविषय-विवक्षायामवतरतीति स्पष्टम्। साहस्री. ६२३.

नहि मृगाः सन्तीति शालयो नोप्यन्ते इति न्यायः। भामती १।१।१ ब्रसू० पृ० ७४.

'नहि मृता दग्धा च भार्या पुनः प्रसवायोद्भवति इति न्यायः। प्रमाणतो निवृत्ता प्रमाणतो दग्धा सा अविद्या भूयः पुनः कथं प्रसूयेत जायेत? 'नहि मृता० प्रसवायोद्भवति' तद्वदित्यर्थः। उपदेशसाहस्री।

नहि वरघाताय कन्यामुद्वहन्ति इति न्यायः। संग्रहः।

नहि वरघाताय कन्यावरणम् इति न्यायः। संग्रहः।

नहि वरघाताय कन्योद्वाहः। वि० १०।२।३२.

नहि वस्तूनां स्वभावानुसारेण किञ्चिदुपासनं प्रवर्तते, किन्तु वचनानुसारेण इति न्यायः। ऐआसा० ३।१।४.

नहि विवाहानन्तरं वरपरीक्षा इति न्यायः। व्यर्थत्वात् इति भावः। साहस्री. ३०६.

नहि शाब्दमशाब्देन (अन्वेति) इति न्यायः। इच्छागोचरत्वस्य मोक्ष-साधारणत्वात् तत्रैव यज्ञादिविनियोगः कुतो न स्यादिति शङ्कानिरासाय अयं न्यायः प्रवर्तते। साहस्री. २३८.

नहि सर्वः सर्वं जानाति इति न्यायः। साहस्री. ४४८.

नहि सर्वत्रानीशशक्तिः इति न्यायः। अनीशस्य जीवस्य शक्तिः न सर्वत्र प्रवर्तते, परिमितत्वात् इत्यर्थः। साहस्री. ४७६.

नहि सार्वभौमानन्दमनुभवन् राजा ग्रामाधिपतिसुखं तुच्छमपेक्षते इति न्यायः। अयमधिकसुखसत्त्वे अल्पसुखत्यागविवक्षायामवतरतीति।

नहि सुतीक्ष्णाऽप्यसिधारा स्वयं छेत्तुमाहितव्यापारा इति न्यायः। अयं कर्तारं विना करणस्य कार्याक्षमत्वविवक्षायां प्रवर्तते। साहस्री. २२१.

नहि सुशिक्षितोऽपि बटुः स्वस्कन्धमारोढुं पटुः इति न्यायः। आत्माश्रयस्य दोषत्वविवक्षायां स्पष्टोऽयम्। साहस्री. २२०.

**नहि सोपानत्के पादे पुनरप्युपानहं प्रतिमुञ्चति इति न्यायः।** साहस्री. ८७४.

**नहि स्थालानि सम्पन्नानि इति भुक्तवताऽपि पुनर्भोक्तव्यम् इति न्यायः।** कल्पतरु० ३।२।२।७ ब्रसू० ।

**नहि स्वयमसिद्धः परं साधयति इति न्यायः।** नहि क्रियैव आत्मानं (क्रियां) कारयति अनिर्वर्तितायाः स्वरूपाभावात् इति । उपदेशसाहस्री. गद्य० १०५.

**नहि स्वल्पो दोषः अमितगुणाभिभावकः इति न्यायः।** साहस्री. ७७०.

**नहि स्वकन्धं स्वयमारोढुं शक्नोति इति न्यायः।** यत्र तु एकस्यैव कर्तृ-कर्मभावो लोकशास्त्रविरुद्धः प्रतीयते, तत्रायं प्रवर्तते इति । साहस्री. ५३३.

**'नहि हस्तिनि दृष्टेऽपि तत्पदेनानुमेष्यते, अनुमा इष्यते । इति न्यायः)।** 'प्रत्यक्षे श्रूयमाणे तु न विद्येतानुमानिकम् ।' इति पूर्वार्धम् । वा० १।३।२।३, पृ० १७२.

**नटाङ्गनान्यायः।** यथा रङ्गभूमौ ह्यागतां नटभार्यां यो यः नटः पृच्छति कस्य भार्याऽसि सुश्रोणि, सा तं तं प्रति तवैवेति वदतीति प्रसिद्धम् । अयम् 'अजादेर्द्वितीयस्य' (पा० ६।१।२३) इति सूत्रमहाभाष्येऽभिहितः ।

**नदीसमुद्रन्यायः।** अयं भगी० ८।८ श्लोकटीकायां नीलकण्ठेनोदाहृतः ।

**नतु वक्तृविशेषनिस्पृहा गुणगृह्या वचने विपश्चितः इति न्यायः।** इति भारविः, २।५ साहस्री. ९६५.

**नववैधव्यमसह्यवेदनमिति न्यायः।** असह्या दुःसहा वेदना यस्मिन् तत्तथोक्तम् । विधवाया मृतभर्तृकाया भावो वैधव्यम् । नवं च तद्वैधव्यं चेति नववैधव्यम् । नवग्रहणं दुःसहत्वद्योतनार्थम्, अन्यत् स्पष्टमिति । साहस्री. ९५१.

**नष्टाश्वदग्धरथन्यायः।** यथा द्वौ रथिनौ कश्चित् ग्रामं प्रविश्य रथाभ्यामवतीर्य अश्वांश्च ताभ्यां मोचयित्वा स्वाभीष्टखट्वादौ निविष्टौ ।

**नागोष्ट्रन्यायः।** नागेन अजगरेण वेष्टितमुष्ट्रं रक्षन् कश्चिद् बाणैरजगरं जघान इति लौकिकी गाथा । तथा निषेधवाक्यानि बाधावधित्वेन आत्मानं रक्षन्ति अनाम्नानं बाधन्ते । संग्रहः ।

**नानावृक्षरसन्यायः।** उक्तं च महोपनिषदि'—यथा पक्षी च सूत्रं च नानावृक्षरसा यथा । यथा नद्यः समुद्राश्च शुद्धोदलवणं यथा ॥ चोरापहार्यौ च यथा यथा पुंविषयावपि । तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ ॥' इत्यादि पूर्णप्रज्ञदर्शने प्रपञ्चितं माधवाचार्यैः । साहस्री. ८२२.

**नान्तरीयकन्यायः** । नान्तरीयकमवश्यम्भावीत्यर्थः । यथा प्रतिबन्धकाभावे नान्तरीयककार्योत्पत्तिः अवश्यम्भाविनीत्यर्थं इत्युक्तम् । यथा च कश्चिदन्नार्थी शालिकलापं सपलालं सतुषमाहरति नान्तरीयकत्वात् स यावत् आदेयं तावदादाय तुषपलालान्युत्सृजति तथा कश्चित् मांसार्थी मत्स्यान् सकण्टकान् सशकलानाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजतीति, प्रकृतेऽप्येवमिति 'स्वरितात्संहितायामनुदात्तानाम्' (पा० १।२।३८) इतिसूत्रमहाभाष्ये उक्तोऽयम् । साहस्री. ६१९.

**नामार्थयोरभेदान्वय इति न्यायः** । नामात्र 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' 'कृत्तद्धितसमासाश्च' इति सूत्रद्वयलक्षितप्रातिपदिकापरपर्यायत्वेन गृह्यते । अर्थः, अभिधेयः, वाच्य इति पर्यायाः । तयोरभेदस्तादात्म्यसम्बन्ध इति भावः ।

**'नामैकदेशे नामग्रहणम्' इति न्यायः** । एकप्रकरणकत्वादितात्पर्यग्राहकप्रमाणसत्त्वे एव । यथा ज्योतिष्टोमप्रकरणगते 'वसन्ते वसन्ते ज्योतिषा यजेत, इति वाक्ये ज्योतिश्शब्देन ज्योतिष्टोमस्य ग्रहणम् । सना० ध० प्र० विवाहप्रकाशः, पृ० १९१.

**नारिकेलजलन्यायः** । नारिकेले जलं कथं कथमायातं इति न ज्ञायते तद्वत् । संग्रहः ।

**नारिकेलफलाम्बुन्यायः** । यथा दृढावयवसंयोगवति नारिकेलफले कथं जलमायातमिति न तर्कगोचरतामेति तथा आगता लक्ष्मीर्नैव लक्ष्यते । उक्तं च 'आगता लक्ष्यते नैव नारिकेलफलाम्बुवत् इति । लक्ष्मीरिति शेषः । साहस्री. २६८.

**'नित्यं न भवनं यस्य, नित्यं चापि न भूतता । न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥' इति न्यायात्** । कर्म उत्पद्यमानमेव भवति करोतिश्च उत्पादनार्थः सकर्मकः । कु० २।१।२।२.

**'नित्यं विशिष्ट एवार्थे प्रत्ययो यत् प्रवर्तते । तत् पूर्वतरविज्ञातप्रकृत्यर्थविशेषणात् ॥' इत्यनेन न्यायेन**, अन्वितानभिधानेऽपि 'परश्च' इति प्रत्ययस्य प्रकृतिपरत्वस्मृतेः, वृद्धप्रयोगरूपाच्च आचारात्, स्वार्थाभिधाने प्रकृतिप्रत्ययक्रमस्य नित्यं विवक्षितत्वावगतेः, अवर्जनीया विशिष्टार्थावगतिः । सु० पृ० ७०८

**नित्याः शब्दार्थसंबन्धा यथाऽवस्थितगामिनः इत्यनेन न्यायेन** (वा० २।३।२।३ पृ० ५८२) नित्यानित्यसंयोगविरोधपरिहारार्थं राज्यशब्दस्य राजविहितकर्मवाचितया अभ्युपगन्तव्यत्वात् । सु० पृ० ९०७ ।

**नित्यानित्ययोर्नित्यविधिर्बलवानिति न्यायः** । कृताकृतप्रसङ्गि नित्यम् ।

तद्विपरीतमनित्यम् । अत एव 'तुदति' इत्यादौ परादपि गुणात् शप्रत्ययादि-र्भवति । एवं लोकेऽपि व्यवहारः । साहस्री. ६३.

**निमित्तानन्तरमेव नैमित्तिकमिति न्यायः ।** (स्पष्टोऽर्थः) । साहस्री. ५६९.

**निमित्तापाये नैमित्तिकस्याप्यपायः इति न्यायः ।** (निमित्ताभावे नैमित्तिक-स्याप्यभाव इति न्यायः) ।

**निमित्ताभावान्नैमित्तिकस्याप्यभावः इति न्यायेन** आत्मतत्त्वज्ञानवतो न कर्मविधिप्रतिप्रत्तिः । उप० साहस्री. पद्य० १।१७ रामतीर्थः, ननु न मोक्षार्थिनः ज्ञानेन प्रयोजनमस्ति, कृतकर्मणां संसारनिमित्तानां फलभोगानन्तरनाशे सति 'निमित्ता० भावः' इति न्यायात् अयत्नलभ्यत्वान्मोक्षस्य । पद्य० १।५ रामतीर्थः ।

**निमित्तनैमित्तिकावृत्तिन्यायः ।** 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' याव-च्छब्दः सामस्त्यं वदन् निमित्तत्वपक्षे पतितः 'निमित्त० न्यायेन' जीवनगत-सामस्त्यस्य नैमित्तिकसंबन्धित्वेन प्राप्तत्वात् स्वार्थानुवादको भवति । कौ० २।४।१।२, पृ० १०२.

**निम्नगाप्रवाहन्यायः ।** अन्यत्र प्रवृत्तस्य जन्मान्तरीयध्यानादिरूपचित्त-प्रवाहस्य निम्नगाप्रवाहन्यायेन अन्यत्र नयने अतिक्लेशः । संग्रहः ।

**निर्धनमनोरथन्यायः ।** अयं पद्येनोपनिबद्धः । यथा 'उन्नम्योन्नम्य तत्रैव निर्धनानां मनोरथाः । हृदयेष्वेव लीयन्ते विधवास्त्रीस्तनाविव ॥' इति । साहस्री. ८०५.

**निर्विमर्शा हि भीरवः इति न्यायः ।** भीरवः भयशीलाः पुमांसो निर्विमर्शाः निर्विचाराः भवन्ति परिणाममविचार्य कार्यं कुर्वन्ति इति भावः । साहस्री. ७३०.

**निषेध्यबोधाद्धि निषेध्यबाध इति न्यायः ।** निषेध्यज्ञानान्निषेध्यस्य बाधो भवति, नान्यर्थविषयेऽस्य प्रचार इति शंकरविजये । साहस्री. ८९३.

**नीरक्षीरन्यायः ।** यत्र सत्यासत्यविवेचनं तत्रास्य प्रवृत्तिः यथा जलदुग्धे संमिश्रिते न प्रतीयेते, तथा तथ्यं ब्रह्म, वितथं मिथ्याभूतमज्ञानादि, ते च सम्यङ्मिलिते तादात्म्यं प्राप्ते स्तो न प्रतीयेते ।

**नीलेन्दीवरन्यायः ।** यथा 'नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याऽधरे पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः । लीयन्ते कबरीषु बान्धव-जनव्यामोहजातस्पृहा दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥' इति साहस्री. २०९.

**नृपनापितपुत्रन्यायः ।** यत्र अतिनिन्द्येऽपि स्वकीये अतिरम्यताबुद्धिविवक्षा तत्रायमवतरतीति ।

पञ्च पञ्चनखा भक्ष्या इति स्मृतिन्यायेन यथा पञ्चनखानां मध्ये पञ्चैव शशादयो भक्ष्या इति नियमे कृते ततोऽन्येषां श्वादीनामभक्ष्यत्वं गम्यते, तथा गवादय एव साधवः इति नियमे कृते अन्येषामसाधुत्वावगतिरित्यर्थः। सु० पृ० २६४.

**पञ्चभिर्मिलितैः किं यज्जगतीह न साध्यते इति न्यायः।** अयं पञ्चभिरेकमतिजनैः सर्वमेव साध्यते इति विवक्षायामवतरतीति। साहस्री. ८४२.

**पञ्चकोशावतरणन्यायः।** पञ्चकोशावतरणन्यायः (१।१।६।१२ ब्रसू०) प्रसिद्धो हि स्थूलारुन्धतीशाखाचन्द्रादिन्यायो लोके, पञ्चकोशावतरणन्यायश्चोत्तरमीमांसायाम्।

**पञ्जरचालनन्यायः।** यथा स्वयत्नैर्दशभिः पक्षिभिरेकक्रियोत्पादनेन पञ्जरचालनं क्रियते, तथा दशभिरिन्द्रियैः प्राणरूपैकक्रियोत्पादनेन देहचालनं क्रियते इति भावः। साहस्री. ४१.

**पञ्जरमुक्तपक्षिचालनन्यायः।** यथा पञ्जरात् मुक्ताः पक्षिणः सदोर्ध्वमेव चलन्ति, एवमेव जीवो देहात् मुक्तः सदोर्ध्वमेव गच्छति इति स एव तस्य मोक्ष इति दिगम्बरैकदेशिनो मन्यन्ते। साहस्री. ६.

**पञ्जरस्थसिंहन्यायः।** यथा—'स्नेहतन्तुमयैः पाशैर्बद्धः सन्तानरज्जुभिः। पञ्जरस्थो यथा सिंहः समर्थोऽपि वशीकृतः॥" इति। साहस्री. ६३७.

**पटाच्छादनन्यायः।** विरुद्धयोर्हि श्रुतिस्मृत्योः विकल्पप्रसङ्गेन कल्पनीये अन्यतरप्रमाणत्वे यावत् श्रुतौ पटाच्छादनन्यायेन कल्पयितुमारभ्यते, तावत् स्मृतौ स्वरूपाश्रयं क्लृप्तमेवोपलभ्य संशयच्छेदे न कदाचिदपि अभूताप्रामाण्याध्यारोपकल्पनोपपत्तिः। वा० १।३।२।३, पृ० १८०.

**'पणलभ्यं हि न प्राज्ञः क्रीणाति दशभिः पणैः।' इति न्यायः।** मेधातिथिः २।७६.

**पतङ्गदीपकन्यायः।** यथा पतङ्गाख्यः कीटविशेषः स्वप्रीतिपात्रदीपके निजाङ्गदाहकत्वसत्त्वेऽपि तत्र पतनं प्रीतिवशमापन्नो नो जहाति, तथा सन्मित्रस्य व्यवहारः। साहस्री. ३२६.

**पतन्तमनुधावतोऽपि गत इति न्यायः।** यथा पतन्तं कथञ्चिज्जालान्निःसृत्योड्डीय गच्छन्तं पक्षिणमनुधावतो जीवान्तकस्य बद्धोऽपि पक्षी गतः, तथा प्रकृतेऽपि।

**पतनान्ताः समुच्छ्रया इति न्यायः ।** यथा ये पदमूर्ध्वं गच्छन्ति तेषां पातोऽप्यवश्यम्भावीति विषये प्रकृतन्यायसंचार इति संक्षेपः । साहस्री. ९२६.

**पतिंवरान्यायः ।** यथा स्वयंवरा कन्या अन्यांस्त्यक्त्वा सर्वोत्तमत्वेनाभिमतं यमभीष्टतमत्वेनादत्ते, न ततोऽन्यत्राभीष्टतमत्वमतिं कुरुते, तथा प्रकृतेऽपीति । साहस्री. ३८९.

**पदमप्यधिकाभावात् स्मारकान्न विशिष्यते इति न्यायः ।** यथा हि स्मारकाः संबन्धिदर्शनादयः अनधिकविषयाः तथैव पदमपि अनधिकविषयत्वतुल्यत्वात् अप्रमाणमिति रत्नाकरः ।

**पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः इति न्यायः ।** पेलवं मृदुलं शिरीषपुष्पं भ्रमरस्य भृङ्गस्य पदं पदस्थितिं सहेत पतत्रिणः पुनः पक्षिणस्तु पदं न सहते इति । कुमारसंभवे स० ५ श्लो० ४.

**पदातिन्यायः ।** यथा बुद्धिबलापरपर्यायचतुरङ्गाख्यक्रीडने पदातिर्ऋजुमार्गेण चलन् हननावसरे वक्रमार्गमुररीकरोति । तथा चोक्तम्—'ऋजुना पथा चलन्नपि हनने वक्रां गतिं कलयन् । बुद्धिबलाख्यं क्रीडन् पदातिरिव दुर्जनो ज्ञेयः ॥" इति । साहस्री. ९७०.

**'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति न्यायः ।** 'अमहाब्राह्मणः' इत्यत्र आरोपितत्वस्य महत्त्वरूपार्थे अन्वये एकदेशान्वयात् 'पदार्थः०' इति न्यायविरोधः । महत्त्वविशिष्टे तु तस्यानारोपात् अन्वयो बाधितः । तथा च वाचकत्वपक्षे अन्वयानुपपत्त्या नञः द्योतकत्वमभ्युपेयम् । तत्त्वप्रकाशिका, पृ० ८५.

**पदार्थानुसमयन्यायः ।** प्राजापत्यन्यायः । अनेकप्रधानेषु संनिपातिनां पदार्थानुसमयः ॥

**पद्मपत्रस्थिततोयन्यायः ।** उक्तं च—पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम् । महाजनस्य सम्पर्कः कस्य नोन्नतिकारकः ॥" इति साहस्री. ८०७.

**पनसोदुम्बरादिवत् इति न्यायः ।** अयं कश्यपसंहितायामुदाहृतः । तथाहि, ननु क्व चिद्रजोदर्शनं विनापि गर्भसंभवो दृश्यते, क्वचित्तु सत्यपि रजसि गर्भाऽनुपलम्भः इति । नैष दोषः, गर्भधारणं हि रजोविना न भवतीत्येषा व्याप्तिः; तत्र क्वचित् प्रकटं क्वचिदप्रकटमन्तरेऽवतिष्ठते । तत्राप्रकटेऽपि रजसि अन्तर्गतरजस्सत्त्वात् गर्भधारणसम्भवः, अतः प्रागुक्तदोषाभावः । अत आह 'वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्नहि । अन्तःपुष्पं भवत्येव पनसोदुम्बरादिवत् ॥ इति । साहस्री ५५४.

'परस्परविरोधे हि न प्रकारान्तरस्थितिः। नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥" इति न्यायः। न च क्रमाक्रमाभ्यामन्यः प्रकारः समस्ति, परस्परविरोधे हीति न्यायेन व्याघातस्योद्भटत्वादिति तत्रैव (सर्वदर्शनसंग्रहे) बौद्धे। साहस्री. ६६५.

परिपूर्णं पदं पदान्तरेणान्वेति इति न्यायेन प्रथमावगतयागादिव्युत्पत्तिवेलायां भावनाविशेष्यत्वस्योपस्थितत्वात् तत्रैव विशेषणज्ञानरूपसामग्रीसत्त्वेन स्वर्गादिपदार्थान्तराणामपि प्रकारतया अन्वयव्युत्पत्तिकल्पना, न तु अन्यत्र, अन्यगतमुख्यविशेष्यत्वस्य अनुपस्थितत्वेन विशेषणाज्ञानाभावात् कौ० २।१।२।५, पृ० ३८.

परिहृत्यापवादविषयं तत उत्सर्गोऽभिनिविशते इति न्यायः। प्रतिलक्ष्यं भिन्नानां सर्वेषां लक्षणानां तन्त्रेणोच्चारणम् 'इको यणचि' इति, ततश्च इकामपि तात्पर्यतो निमित्तत्वप्रतिपादनम्। न चैवं श्रीशः इत्यादौ यणप्रसङ्गः, व्यक्तिपक्षे 'विप्रतिषेधे परमेव' इति नियमबलेन तद्व्यवितविषयकशास्त्रस्यैव विरहकल्पनात्। एवमपवादविषयेऽपि सुश्रियौ इत्यादौ बोध्यम्। परिहृत्यापवादविषयं० इति न्यायात्। शब्दकौस्तुभः हयवरट्.

परिव्याणन्यायः। इतरमन्यस्तेषाम् इति न्यायः। कुण्डपायिनामन्येन होत्रे अध्वर्युकर्मणि परिवीरसीति मन्त्रः पठनीयः।

परिशेषन्यायः। उक्तादन्यः परिशेषः, तस्य न्यायः रीतिः। संग्रहः।

परोपकाराय सतां विभूतयः इति न्यायः। यत्र परोपकारविवक्षा, तत्रास्य प्रवृत्तिरिति। उक्तं च 'परिनिर्मथ्य वाग्जालमिदमेव सुनिश्चितम्। नोपकारात् परं पुण्यं नापकारादघं परम् ॥" साहस्री. १०००.

पर्जन्यन्यायः। यथा पर्जन्यो जलेऽपि वर्षति स्थलेऽपि वर्षति। एवं विवक्षायां प्रवर्ततेऽयं न्यायः।

पर्णमयीन्यायः। पर्णतान्यायः। (फलश्रुतिः अर्थवादः) ॥

पर्युदासन्यायः। येयजामहन्यायः। अनुयाजमहापितृयज्ञयोः येयजामहहोतृवरणयोः पर्युदासः।

पर्वताधित्यकान्यायः। यथा 'अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम्' इति रघुवंशे। साहस्री. २११.

पर्वतोपत्यकान्यायः।'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इति कोशात्। साहस्री. २१२.

**पवनताडनन्यायः** । असंभवद्वस्तुनि व्यर्थप्रयत्नकरणे अयं प्रवर्तते । नहि यष्ट्यादिना पवनस्य ताडनं सफलं भवति । साहस्री. ६६७.

**पवमानेष्टिन्यायः** । आधानं अग्न्यर्थम् ॥

**पशुतन्त्रविप्रकर्षन्यायः** । (वा० पृ० ५०६ 'अन्यथा तु पशुतन्त्रविप्रकर्षन्यायेन सकृत् कृतैव उपकुर्यात्') ॥

**पशुपुरोडाशन्यायः** । अग्नीषोमीयपशुपुरोडाशयागः पशुदेवतासंस्कारकः ।

**पशुसोमाधिकरणन्यायः** । (पशुसोमाधिकरणोक्ता युक्तिः) । साहस्री. ८६६.

**पाटच्चरलुण्ठिते वेश्मनि यामिकजागरणम् इति न्यायः** । पाटच्चरश्चोरः । यामिकः प्रहरकः । प्रयोजनाऽनुपयुक्तवेलायामयमवतरतीति खण्डने स्पष्टः । साहस्री. ६७२.

**पाठक्रमादर्थक्रमो बलीयान् इति न्यायः** । अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीः' इति । तस्य यथेष्टमभिसम्बन्धो भवति, उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा, अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति । अत एव 'आनुपूर्व्येण संनिविष्टानां यथेष्टमभिसंबन्धः' इति न्यायोऽप्यवतरतीति । 'न पदान्त०' (पा० १।१।५८) इति सूत्रमहाभाष्यकैयटयोः स्पष्टः । साहस्री. ४६६.

**पात्रापात्रविचारस्तु धेनुपन्नगयोरिव इति न्यायः** । यथा—'तृणात्संजायते क्षीरं क्षीरात्संजायते विषम्' इति । गावस्तृणं खादन्ति क्षीरं ददति । सर्पाश्च क्षीरं पिबन्ति विषं ददति । एवं ज्ञात्वा पात्रापात्रविचारः कर्तव्य इति भावः । साहस्री. ७५७.

**पात्रभेदन्यायः** । **पात्रन्यायः** । अग्नीषोमीये पशौ अनुयाजार्थस्य पृषदाज्यस्य धारणार्थं पात्रं भिन्नम् ।

**पारिषदन्यायः** । 'समज्या परिषद् गोष्ठी सभा' इत्यभिधानात् परिषदि सभायां साधुः पारिषदः सभ्यः । तेषामेकस्मिन् मृतेऽपि अवशिष्टैस्तत्कार्यनिर्वाहो यथा भवति, तथा प्रकृतेऽपीत्यर्थः । साहस्री. १५.

**पार्वणन्यायः** । पार्वणहोमयोर्विकृतौ नातिदेशः ॥

**पार्ष्णिकान्वयन्यायः** । (अरुणाधिकरणोक्तोऽयम्) । क्रमप्रकरणाभ्यां स्तोत्राङ्गत्वेनावगतानामृचाम् अभिव्यक्तिं कुर्वन् साम तद्द्वारा स्तुतिं निर्वर्तयितुं शक्तमिति श्रुतस्तुत्यर्थत्वनिर्वाहकानुष्ठानविशेषलाभाय पार्ष्णिकान्वयेन स्तुत्यर्थासु ऋक्षु अवतरति । रसायनम्, पृ० ६९.

**पावकाग्निन्यायः** । विकृतौ देवतानिष्ठगुणवाचिपदस्यापि त्यागादौ प्रयोगः ।

**पाशन्यायः** । पशुद्वयवत्यां विकृतौ पाशैकत्वपाशबहुत्वाभिधायिनौ मन्त्रौ द्विवचनान्तेन ऊहितव्यौ ॥ [पाशाधिकरणम् (९।३।५) पाशन्यायः (९।३।४) इति द्वे अधिकरणे । तत्र पाशाधिकरणे विकल्पः साधितः, पाशन्याये तु ऊहः साधितः । तस्मात् सावधानतया उपयोगो ज्ञातव्यः । के०]

**पाशुकाज्यभागन्यायः** । आज्यभागप्रतिषेधस्य नित्यानुवादत्वेन पशौ आज्यभागप्रतिषेधस्य अर्थवादत्वं सोमे ॥

**पाषाणेष्टकान्यायः** । यथा इष्टकापेक्षया पाषाणस्यातिकठिनत्वम्, तथा प्रकृतेऽपि । अयं न्यायः वैषम्याधिक्यविषयक (अश्मलोष्ट) न्यायापेक्षया स्वल्प-वैषम्यविवक्षायां बोध्यः । साहस्री. ११२.

**पिण्डं त्यक्त्वा करं लेढीति न्यायः** । यथा विहाय ब्रह्मानन्दं तल्लेशभूत-विषयानन्दाद्यनुभवनं व्यर्थमिति । साहस्री. ३६१.

**पिण्याकयाचनार्थं गतस्य खारिकातैलदातृत्वाभ्युपगम इति न्यायः** । सर्व-दर्शनसंग्रहे पूर्णप्रज्ञनये अयं न्यायः । साहस्री. ७०९.

**पित्रनुसृतस्तनन्धयन्यायः** । पिता यथा स्तनन्धयं बालमनुसृत्य वर्तते, तथा विदुषा अज्ञो जनोऽनुसर्तव्यः । संग्रहः ।

**पित्तं यदि शर्करया शाम्यति, कोऽर्थः पटोलेनेति न्यायः** । स्वल्पप्रयत्नेन कार्यसिद्धौ बहुप्रयत्नान्तरं व्यर्थमिति विषयेऽस्य प्रवृत्तिरिति । अत्र पटोलशब्देन पटोलपत्रं गृह्यते, तस्य शीतगुणत्वात् । उक्तं च 'पटोलपत्रं पित्तघ्नं मूलं तस्य विरेचकम् । फलं तस्य त्रिदोषघ्नं नाडी तस्य कफापहा ॥' इति । साहस्री. ७९९.

**पिपीलिकाभिर्मन्थानगिरिविलेपनन्यायः** । यथा आहुः 'श्रद्धत्स्व मन्थान-गिरिं पर्यलिम्पन्पिपीलिकाः' इति । अश्रद्धेयस्योपन्यासे अयं प्रवर्तते । साहस्री. ८७९.

**पिपीलिकागतिन्यायः** । यथा पिपीलिका वृक्षशिरःस्थितमधुरफलरसास्वादे झटित्यशक्ता सत्यपि बह्वायासेन गच्छन्ती कालान्तरे तद्रसमवश्यमास्वादते, तथैव अज्ञानी पुरुषः श्रुतिस्मृतिपुराणविहितकर्मोपासनादिमार्गसंजातशुद्धान्तः-करणतया जन्मान्तरेषु कदाचित् प्राप्तपूर्णज्ञानोऽवश्यं ब्रह्मानन्दमनुभवतीति । साहस्री. ५१५.

**पिष्टपेषणन्यायः** । यत्र निष्फला क्रिया तत्रास्य प्रवृत्तिः । साहस्री. ३०१. नहि अविद्वान् विहितोऽस्ति इत्यवश्यं तावदग्नीध्रा आत्मीयाः पदार्थाः प्रागेव

कर्मप्रक्रमादवगन्तव्याः। तत्र प्रैषः पिष्टपेषणन्यायेन अर्थं ज्ञापयितुम् अशक्नुवन् अदृष्टार्थो भवति। वा० १।२।४।३१-३।

**पीलुपत्रफलन्यायः**। यथा पीलुवृक्षस्य पत्राणि कटुकानि फलानि च मधुराणि। द्वयोः पत्रफलयोः पीलुजन्यत्वात् साम्यमिति तर्कः। अयं च अत्यन्तासंगतमूर्खवितर्ककथनाविर्भावे प्रवर्तते। एवं च अभेदसाधको हेतुः गोमयपायसीयन्यायवदाभासतां पीलुपत्रफलन्यायवदाभासतां च भजेत इति बोद्धे। साहस्री. ६६८.

**पुत्रलिप्सया देवं भजन्त्याः भर्ताऽपि नष्टः इति न्यायः**। यथा केचित् वादिनः शङ्कन्ते ननु प्रत्यगभिन्नमेकमेव अद्वितीयं ब्रह्म इति सिद्धान्तो भवतामिति। 'ईश्वरः सर्वं एवैते' इत्युक्त्या तु प्रकृतन्यायेन जीवेशाभेदं साधयितुं प्रवृत्तैर्भवद्भिः सर्ववादिसंमतेशाभेदोऽपि नाशितः स्यात् इति वदन्ति इति। साहस्री. ८५.

**पुंविषयन्यायः**। (पुमान् जीवः विषयः घटादिः एतौ यथा भिन्नौ, तद्वत् जीवेश्वरावपि भिन्नौ इत्यत्र एष न्यायः)। साहस्री. ८२१.

**पुराकल्पन्यायात्** 'तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य' इत्यादिवाक्यश्रवणेन पाण्डित्यादिविधौ स्तावकम्। यस्मात् पूर्वे ब्राह्मणाः पाण्डित्यादिसाधनैर्ज्ञानं लब्ध्वा सकलविक्षेपरहितं जीवन्मुक्तिसौख्याभिव्यञ्जकं पारमहंस्यं प्राप्तवन्तः, तस्मादाधुनिकोऽपि पाण्डित्यादिसाधनैर्ज्ञानं संपादयेत् इत्यर्थावगमात्। आभरण० ३।४।१४।४७) ब्रसू०।

'पुरुषं हि परित्यज्य नानृतं प्राप्यते क्रतौ। पुरुषे तन्निषिद्धं चेन्निषिद्धं तत् क्रतावपि ॥' इति वार्तिकवक्ष्यमाणन्यायेन। (३।४।४।१२ पृ० ६१०) पुरुषार्थस्यापि ब्रह्मसूत्रस्य (यज्ञोपवीतस्य) प्रौढ्या क्रतावपि प्राप्तेरनुवादोपपत्तिवक्तुं पुरुषार्थब्रह्मसूत्रस्मृतिरुदाहृता। सु० पृ० १६५४.

**पुरुषकेशलोमन्यायः**। यथा पुरुषात् केशलोमानि संभवन्ति, तथा अक्षरात्संभवतीह विश्वमिति शारीरकभाष्येऽभिहितम्। साहस्री. ७६६.

**पुरोडाशकपालन्यायः**। तुषोपवापन्यायः। दर्शपूर्णमासयोः कपालं न तुषोपवापप्रयुक्तम्, किन्तु श्रपणप्रयुक्तम् ॥

**पुष्करपलाशन्यायः**। यथा पद्मपत्रं जलेन लिप्तं न भवति, तत्समकक्षायामवतरत्ययम्। यथोक्तम्—'पद्मपत्रमिवाम्भसा' इति। साहस्री. ७२४.

**पुष्टलगुडन्यायः**। बहूनां शुनां मध्ये एकस्य प्रहारार्थं प्रक्षिप्तेन पुष्टेन लगुडेन

इतरेऽपि श्वानो निराक्रियन्ते तथा सांख्यवादनिराकरणयुक्त्या इतरेऽपि वादिनो निरस्ता भवन्ति । तदुक्तम् 'एतेन सर्वे व्याख्याताः' इति । संग्रहः ।

**पुष्पवन्तोपकारन्यायः** । 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः पुष्पवन्तशब्दो मतुबन्तः अकारान्तोऽपि । 'पुष्प विकसने' । भावे घञ् । पुष्पः प्रकाशस्तद्वन्तावित्यर्थः । एकयोक्त्येति वचनात् पुष्पवन्त इति पुष्पवानिति वा सूर्यश्चन्द्रो वा न वक्तव्यः । यथा रोदसी इत्येकयोक्त्या द्यावापृथिव्यावुच्येते इति । अकारान्तपक्षे 'अव रक्षणे,' 'जॄविशिभ्यां झच्' ४०६ इत्यौणादिकसूत्रेण बाहुलकाज्झच्प्रत्यये 'झोऽन्तः' (पा० ७।१।३).

**पूतिकूष्माण्डन्यायः** । अयं सर्वदर्शनसंग्रहे जैमिनीये । पूतिशब्दोऽत्र दुर्गन्धिवाचकः । पूतिकूष्माण्डवद् अनेकयुक्तिखण्डितो वादोऽपि उच्यते । साहस्री. ७७४.

**पूर्वं हि अपवादा अभिनिविशन्ते पश्चादुत्सर्गाः इति न्याय.** स्पष्टः । शेखरः परि० ६३ च० ।

**पूर्वात् परं बलीयः इति न्यायः** स्पष्टार्थः । संग्रहः ।

**पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यति इति न्यायः** । अनेन हि श्रुत्युक्तकालाधिकरणकभोजनादेः प्रवृत्तिमत्पुरुषविषयतया विहितस्य सदोपवासादिबोधकवचनसंकोचकतया संकुचितवाक्यार्थस्य यथावदनुष्ठानेन सिध्यत्येव यथोक्तफलसंपादकत्वमिति बोध्यमिति । साहस्री. ६१४.

**पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते इति न्यायः** । अदृष्टविशेषो धर्मः । स च 'पूर्वजन्म०' इति न्यायेन पूर्वार्जितकर्मरूपं दैवं वा भवतु अन्यद्वा, सर्वथा धर्माधर्मयोरनुमेयत्वमेव न प्रत्यक्षत्वम् । सना० ध० प्र० पृ० ७०.

**पूर्वाह्णच्छायान्यायः** । यथा दिनपूर्वार्धच्छाया प्रथमं महती पश्चात् क्षीणा, तथा खलस्य मैत्री ज्ञातव्येति भावः । साहस्री. ३३१.

**पूषानुमन्त्रणमन्त्रन्यायः** ।

**पृथिव्योषधिन्यायः** । यथा पृथिव्यामोषधयः संभवन्तीति, तथा प्रकृतेऽपि । साहस्री. ७६८.

**पृष्ठशमनीयन्यायः** । उदवसानीयस्य ऋत्विगन्तरसंपादनेन प्रत्येकं कर्तृत्वम् ।

**पौरोडाशिकाज्यभागन्यायः** । आज्यभागन्यायः । आज्यभागादयः अन्यतोऽलब्धोपकाराः पशुपुरोडाशे कर्तव्याः ।

**पौर्णमासीन्यायः** । विद्वद्वाक्यद्वयं समुदायद्वयानुवादः ।

**प्रकरणाद् वाक्यं बलीय इति न्यायः ।** मीमांसकमते विनियोगविधेः सहकारिभूतेषु षट्सु प्रमाणेषु चतुर्थप्रमाणम् उभयाकाङ्क्षाप्रकरणम् इति । अत एव 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्' इत्यत्र इन्द्राग्नीपदस्य लिङ्गात् दर्शाङ्गत्वे सिद्धे 'इदं हविः' इत्यादेरपि तदेकवाक्यत्वात् दर्शाङ्गत्वम्, न तत्प्रकरणाद् दर्शपूर्णमासाङ्गत्वम्, प्रकरणात् वाक्यस्य बलीयस्त्वादिति प्रोक्तमिति । साहस्री. ८५६.

**प्रकरणान्तरन्यायः ।** कुण्डपायिनामयने मासाग्निहोत्रादीनां कर्मान्तरत्वम् ॥

**प्रकल्प्यापवादमुत्सर्गोऽभिनिविशते इति न्यायः ।** 'प्रकल्प्य चापवादविषिमुत्सर्गोऽभिनिविशते' इति न्यायेन सामान्यशास्त्रस्य विशेषशास्त्रविषयातिरिक्तविषयत्वम् । सना० ध० प्र०, पृ० २९७.

**प्रकृतौ वा द्विरुक्तत्वात् इति न्यायः ।** अनारभ्याधीतानाम् । साहस्री. ८९४.

**प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायः ।** यथा औपगवो वापक इत्यादौ हि क्रियान्वयात्, एवमन्यत्रापि बोध्यम् । साहस्री. ६०.

**प्रकृतिवदनुकरणं भवति इति न्यायः ।** प्रकृतिरत्र परमात्मेति गृह्यते । अनुकरणं च सदृशीकरणम् । यथा परमात्मसदृशा एव तदवतारा इति बोध्यमित्यन्यत्र विस्तरः । साहस्री. ९९६.

**प्रकृतिवत् कर्तव्यमिति न्यायः ।** 'यथान्यायम्' इति सूत्रपदम् । अत्र सुबोधिनी—'यथान्यायं प्रकृतिवत् कर्तव्यम् इति न्यायसिद्धम्' इति । वृ० ५।४।७।२३.

**प्रकृतिवद्विकृतिः कर्तव्या इति न्यायः ।** अयं महाभाष्यपस्पशायां कैयटेनोक्तः । तथाहि 'ऊहः खल्वपि' इति भाष्यप्रतीकमादाय 'इह' यस्मिन् यागे इति कर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा प्रकृतिः, येनोपजीव्यते सा विकृतिः प्रकृतिवद्विकृतिः कर्तव्या' इति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग्विजानाति । साहस्री. ५९४.

**प्रकृतिविकारन्यायः ।** प्रकृतेः मृदादेः सकाशाद् घटादिर्विकारः यथा तत्त्वतो भिन्नो न भवति एवमन्यत्रापि प्रकृतिविकारव्यतिरेकन्यायेन समानार्थकः अयं न्यायो द्रष्टव्यः । के०

**प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायः ।** (पङ्कप्रक्षालनन्यायोऽपि अयमेव) । पङ्कलेपने प्रक्षालनमपेक्ष्य पङ्कस्पर्शनमेव न कर्तव्यमिति लोकप्रसिद्धिवदन्यत्राप्यनिष्टसाधनस्य कारणान्तरेण निवारणमपेक्ष्य अनिष्टसाधनमेव न कर्तव्यमिति यत्र विवक्षा तत्रास्य प्रवृत्तिरिति । साहस्री. ३४२.

'प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम्' इति न्यायः ।(भारविः २।११) साहस्री. ६६५.

प्रणीताधर्मन्यायः । प्रणीतावाङ्नियमन्यायः दर्शपूर्णमासयोः प्रणीता-वाग्यमः तद्देशपदार्थावान्तरापूर्वप्रयुक्तः ।

प्रतिनिधिन्यायः । अग्निहोत्रादिनित्यकर्माणि श्रुतद्रव्यापचारे प्रतिनिधिना समापनीयानि ।

प्रतिपाद्यप्रयोजकत्वायोगरूपन्यायेन प्रतिपत्तीनां प्रतिपाद्योत्पत्तिप्रयोजकत्वा-भावः सिध्यति । बाल० पृ० १०६.

प्रतिप्रधानं गुण आवर्तनीय इति न्यायः । साहस्री. ८६८.

प्रतिप्रसवविधिविषयन्यायः । विकृतावपि चोदकात् खादिरादेरेव प्राप्त्या प्रतिप्रसवन्यायेन सौमापौष्णपशौ अप्राप्तैव उदुम्बरजातिः । रसायनम् । पृ० २१३.

प्रतिभातश्च पश्यन्ति सर्वं प्रज्ञावतां धियः इति न्यायः । 'प्रज्ञा नवनवोन्मेष-शालिनी प्रतिभा मता' । सर्वतोमुखी बुद्धिः इति यावत् इति । स्पष्टार्थोऽयम् । साहस्री. ६४५.

प्रत्यक्षे किमनुमानमिति न्यायः । प्रत्यक्षानुमानयोश्चाविलम्बितप्रतीतिरूप-त्वात् प्रत्यक्षं बलीय इति । साहस्री. १६२.

प्रत्यवयवं वाक्यपरिसमाप्तिरिति न्यायः । तद्यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामिति, न चोच्यते प्रत्येकमिति, प्रत्येकं च भुजिः परिसमाप्यते । साहस्री. ५९६.

प्रत्यासत्तिन्यायः । यत्र शीघ्रोपस्थितिविवक्षा, तत्राऽस्यावतार इति प्रत्या-सत्तिः । सम्बन्धः सन्निकर्षः । तस्य न्यायः रीतिः । साहस्री. ६६८.

प्रथमोपस्थितन्यायः । प्राथमिकहविःशेषादेव शेषकर्म ।

प्रथमग्रासे मक्षिकापात इति न्यायः । अयं कर्मप्रारम्भे एव विघ्नसंभवे । साहस्री. ७५२.

प्रदीपे प्रदीपं प्रज्वाल्य तमोनाशाय यतमानः इति न्यायः । प्रदीपं प्रज्वाल्य प्रदीपे तमोनाशाय यतमानः इत्यर्थः । लघोरुपायात् साध्यसिद्धौ भवन्त्यां गुरौ उपाये प्रवर्तमान इदं दोषोद्भावनं प्रदीपे प्रदीपं प्रज्वाल्य तमोनाशाय यतमानस्येव पुंस इति । अयं काव्यदीपिकायाम् । साहस्री. ६६१.

प्रदीपन्यायः । अयं न्यायः यत्र अन्योन्यविरुद्धानामपि संभूयैककार्यकारित्वं, तत्र संचरति । यथा हि वर्तितैले अग्निविरोधिनी, वर्तितैलाग्नयः सर्वे परस्परं

विरोधिनः संभूयैकं प्रकाशलक्षणं कार्यं कुर्वन्ति, तथा सत्त्वरजस्तमांसि परस्परं विरुद्धान्यपि संभूयैकं देहादिकं प्रवृत्त्यादिकं च कार्यं जनयन्तीति। साहस्री. १७३.

**प्रधाने गृहीते अप्रधानग्रहस्यान्याय्यत्वादिति न्यायः।** यथा 'अयं समुद्रः' इत्यत्र तरङ्गफेनबुद्बुदादिप्रत्ययादर्शनमिति भावः। साहस्री. ५३७.

**प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः इति न्यायः।** यथा लोके बहुषु गच्छत्सु सैन्यरथेषु 'कोऽयम्' इति प्रश्ने 'राजा' इत्युत्तरं दृश्यते। अयं न्यायः 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' (पा० १।२।६८) इति 'हेतुमति च' (पा० ३।१।२६) इति सूत्रयोः महाभाष्यकैयटयोः स्पष्टः। साहस्री. ६७.

**प्रधानमल्लनिबर्हणन्यायः।** मल्ला बाहुयुद्धविशारदास्तेषु प्रधानस्य निबर्हणं मारणं भूमौ प्रतिष्ठापनं तत्पृष्ठभागस्य तया संयोजनमिति यावत्। यथा जयकामेन प्रधाने निगृहीते तदपेक्षया दुर्बलानामन्येषां पराजयः सुकर इति न्यायार्थः। साहस्री. २४४.

**प्रपामेलन्यायः।** यथा प्रपा पानीयशाला तस्या नानादिग्भ्यो बहवो जीवा मिलन्ति, द्वितीये क्षणे भिन्नमार्गाः प्रयान्ति, एवं संसारिणो जीवा मिलन्ति वियुञ्जन्तीति। साहस्री. ८६८.

**प्रभूणां हि विभूत्यन्धा धावत्यविषये मतिः इति न्यायः।** अयमहल्येन्द्रप्रस्तावे दृष्टान्तभूत इति। साहस्री. ७३३,

**प्रमदान्यायः।** यथा एकस्यां प्रमदायां भर्तुः सुखं जायते, तामविन्दतश्चैत्रस्य दुःखं जायते, तस्यामेव सपत्न्यां द्वेष इति प्रमदयैकयैव सर्वे भावा भवन्तीति विषये अस्य प्रवृत्तिरिति। साहस्री. ६२८.

**प्रयाजे च तन्न्यायत्वात् (१०।१।७।१४)।** दर्शपूर्णमासयोः उत्तमे प्रयाजे संस्कारकर्मत्वं प्रत्येतव्यम्। चशब्देन पूर्वोक्तं संस्कारकर्मत्वमन्वादिश्यते। तन्न्यायत्वात् तस्याः स्थाण्वाहुतेः न्याय एव न्यायः यस्मिन् स उत्तमः प्रयाजः तन्न्यायः तन्न्यायत्वात् प्रकृतयागीयदेवतानां संस्कारकर्म उत्तमः प्रयाजः।

**प्रयाजैकादशत्वन्यायः।** अग्नीषोमीये पशौ प्रयाजानुयाजानामेकादशत्वसंख्या सर्वसंपाद्या।

**प्रयाजशेषाभिघारणन्यायः।** दर्शपूर्णमासयोः प्रयाजशेषेण हविरभिघारणार्थं शेषधारणतत्पात्रे पृथक् न कर्तव्ये। प्राजापत्यानां वपानां प्रयाजशेषेण अभिघारणं नास्ति।

**प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति न्यायः ।** अयं न्यायो भट्टाचार्यैः विवृतः । तथाहि, 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते । जगच्चासृजतस्तस्य किं नाम न कृतं भवेत् ॥' इति ।

**प्रवर्ग्यन्यायः ।** प्रवर्ग्यनिषेधाधिकरणम् । ज्योतिष्टोमे श्रुतस्य प्रवर्ग्यस्य अनूचानव्यतिरिक्तकर्तृके अग्निष्टोमप्रथमप्रयोगे एव निषेधः ।

**प्रसक्तानुप्रसक्तन्यायः ।** अयमन्योद्देशेन अन्यदीयस्यापि सहानुष्ठाने अन्योद्देशेन प्रवृत्तौ अन्यस्यापि सिद्धौ यावत् तत्र प्रवर्तते । यथा अलं प्रसक्तानुप्रसक्तेन इत्युक्तिः प्रायो ग्रन्थेषु दृश्यते । साहस्री. ५६४.

**प्रसिद्धानुवादेनाप्रसिद्धं निरूपणीयमिति न्यायः ।** अयं न्यायो दृग्दृश्यविवेकापरपर्यायवाक्यसुधाख्यग्रन्थटीकायां व्यवहृतः "वाक्यार्थज्ञानस्य चान्वयव्यतिरेकाभ्यां पदार्थपरिशोधनपूर्वकत्वात्, पदार्थपरिशोधनस्य 'प्रसिद्धानुवादेनाप्रसिद्धं निरूपणीयम्' इति न्यायेन प्रतिशरीरम् अहमहमिति प्रसिद्धजीवनवाचकत्वं पदार्थपरिशोधनपूर्वकत्वात्" इति । साहस्री. ६२९.

**प्राकाशन्यायः ।** राजसूयगते दशपेये दक्षिणारूपाभ्याम् प्रकाशाभ्याम् अध्वर्युभागस्यैव प्राकृतस्य बाधः ।

**प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना इति न्यायः ।** यत्र निकृष्टजातिजोऽपि गुणी स्वगुणोदयेन ख्यातिं यायात् तत्रायं प्रचरतीति । साहस्री. ७९३.

**प्रायेण भार्यादौःशील्यं स्नेहान्धो नेक्षते जनः इति न्यायः ।** स्पष्टार्थः । साहस्री. ६४९.

प्रायेण यागानां दर्शपूर्णमासकालत्वम् । भा० ७।१।१।२

**'प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः' इति न्यायः ।** साहस्री. ७७२.

**प्रावृत्तिकक्रमन्यायः ।**

प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ५।१।५।८॥

**प्रासादवासिन्यायः ।** यथा एक एव देवदत्तः कालभेदेन प्रासादोपर्यधश्च वसन्नपि प्रासादवासीत्युच्यते, तथा 'मुखनासिकावचनोऽनुनासिकः' (पा० १।१।८) इत्यादावपि ।

**प्लवङ्गमगतिन्यायः ।** यथा पिपीलिकापेक्षया प्लवङ्गमः शाखान्तरे उत्प्लवमानो द्वित्रिचतुरुत्प्लवैरुच्चतरमपि तारवफलं स्वल्पायासेन लभते, तथैव मध्यमाधिकारी अज्ञान्यपेक्षया जन्मान्तरीयशुद्धसंस्कारतया शुद्धमनस्कः सद्गुरु-

सकाशात् लब्धात्मविद्यश्चिद्घनानन्दीयरसं झटित्यास्वादते इति । साहस्री. ५१६.

फलमुखगौरवं न दोषावहमिति न्यायः । यत्र गौरवे फलसंपत्तिर्भवेत् तत्रायं प्रवर्तते । यथा चायं न्यायो मुक्तावल्या समासलक्षणानिरूपणप्रस्तावे निरूपित-स्तथाहि, अत एव 'निषादस्थपतिं याजयेत्' इत्यत्र न तत्पुरुषो लक्षणापत्तेः, किन्तु कर्मधारयः लक्षणाभावात् । न च निषादस्य संकरजातिविशेषस्य वेदानधिकाराद्याजनासंभव इति वाच्यम्, निषादस्य विद्याप्रयुक्तेस्तत एव कल्पनात्वात् लाघवेन मुख्यार्थान्वये तदनुपपत्त्या कल्पनायाः फलमुखगौरवतया इति दिक् । साहस्री. ४७६.

फलवत्सहकारन्यायः । यथा आपस्तम्बसूत्रम्, तद्यथा—'आम्रे फलार्थे निर्मिते छायागन्धे अनूत्पद्येते, एवं धर्मे चर्यमाणे अर्थादयोऽनूत्पद्यन्ते' । यथा 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यभिधानादतिसौरभ आम्रवृक्षो-ऽतिमधुरपक्वफलनमितशाखः समुपसन्नाय छायार्थिने जनाय फलं परिमलं चाप्रार्थितमपि ददाति, तथैकफलाकाङ्क्षया स्वेष्टदेवताराधनमन्यदपि फलं प्रयच्छतीति । एतत् समानविषयकलौकिकव्यवहारान्तरेष्वपि बोध्यम् । साहस्री. ४.

बकबन्धनन्यायः । बकबन्धनाय बकस्य शिरसि नवनीतस्थापनायासो यथा वृथा । नवनीतस्थापनकाले एव बन्धनस्य सुसाध्यत्वात् । (के०)

बकवृत्तिन्यायः । स्पष्टोऽर्थः । साहस्री. ६५७.

बधिरान्मन्दकर्णः श्रेयानिति न्यायः । स्पष्टार्थोऽयम् । साहस्री. ६६६.

बधिरकर्णजपन्यायः । यत्र क्रिया निष्फला तत्र अस्य प्रवृत्तिः । साहस्री. ३०८.

बर्हिर्न्यायः । गौणमुख्याधिकरणम् । मन्त्रविनियोगो मुख्यार्थे । लिङ्ग-विनियोगाधिकरणम् । लिङ्गाधिकरणम् ।

बहुभ्यः श्रोतव्यं बहुधेति न्यायः । अयं न्यायः सत्सु बहुषु गुरुष्वत्र कश्चि-देको ब्रह्मवित्तमो लभ्यते, ततः संसारभ्रमापनोदकं सम्यग्ज्ञानं सलक्षणं सिध्य-तीत्यभिप्रायकोऽस्ति । न तु बहुभ्यो ज्ञानं संपादनीयमिति, 'श्रोत्रियं ब्रह्मनिष्ठम्' इत्येकवचनश्रवणात्, 'उपासीदेकमेव सद्गुरुं ब्रह्मवित्तमम्' इत्येकवचनाद् चेति । साहस्री. ५३१.

'बहूनामनुग्रहो न्याय्य इति न्यायः । यथाहुः—'बहूनामप्यसाराणां मेलनं

कार्यसाधकम् । तृणैः संपाद्यते रज्जुस्तया नागोऽपि बध्यते ॥' इति साहस्री. ३१५.

बहूनामनुरोधो न्याय्य इति न्यायः । साहस्री. ५६०.

बहूनामनुसरणं न्याय्यमिति न्यायः । साहस्री. ३६६.

बहुच्छिद्रघटप्रदीपन्यायः । अयं श्रीशंकराचार्यैः संक्षेपेण भाष्यतात्पर्य-प्रकाशके श्रीमद्दक्षिणामूर्तिस्तोत्रेऽभिहितः । तथाहि 'नानाच्छिद्रघटोदरस्थित-महादीपप्रभाभास्वरं, ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते । जाना-मीति तमेव भान्तमनुभात्येतत्समस्तं जगत् तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणा-मूर्तये ॥ इति । साहस्री. ३६३.

बहुराजकपुरन्यायः । यथा एकस्मिन्पुरे यदा बहवो राजानस्तदा तेषा-मैकमत्याभावेन प्रजानां क्लेशस्तथा एकस्मिन् देहे नानेन्द्रियाणां कर्तृत्वे स्वीकृते मिथो विरोधान्नैकमपि सिध्येत् । तथाहि, यदा चक्षुर्दर्शनाय प्रवर्तमानं भवति तदाऽन्यानि इन्द्रियाणि स्वस्वक्रियया निर्वाहोद्यतानि भवन्ति चेत् तदा दर्शनादि नैकमपि जायते, एवं विवक्षायामस्य प्रवृत्तिरिति । साहस्री. १६.

बहुवृकाकृष्टमृगन्यायः । यथा बहूनां वृकाणां प्रत्येकं भोक्तृत्वे बहूनामैक-मत्यासंभवेन विरुद्धादिक्रियया मृगदेहस्योन्मथनप्रसङ्गस्तथा प्रकृतेऽपि । साहस्री. १८.

बहुसपत्नीकन्यायः । यथा बहुसपत्नीकः पुरुषः सर्वासां पत्नीनां युगपत् कामनाकरणेऽशक्तो दुःखमनुभवति, तथा नानेन्द्रियविषयभोगेन तत्तदिन्द्रियपरो-ऽपि युगपत्कार्यप्राप्तौ दुःखमनुभवतीति । यथा चोक्तम्—जिह्वैकतोऽमुमुपकर्षति कर्हि तर्षा, शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् । घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ इति । साहस्री. ४६६.

बाणोष्ट्रीन्यायः । यथा कश्चिदुष्ट्रपतिरजगरेण वेष्टितमुष्ट्रं रक्षन् बाणै-रजगरं जघानेति लौकिकी गाथा तथा निषेधवाक्यानि बाधावधित्वेनाऽऽत्मानं रक्षन्ति अनात्मानं बाधन्ते इति । साहस्री. १०४.

बालादपि सुभाषितं ग्राह्यम् इति न्यायः । इति भारविः । साहस्री. ६६०.

बालाग्रशतभागोऽपि न कल्प्यो निष्प्रमाणकः । प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ॥ इति न्यायः । साहस्री. ३८१.

बिलवर्तिगोधान्यायः । यथा बिले गर्ते वर्तमानाया गोधाया विभजनं विभाजकधर्मेण निर्देशो न संभवति, तस्या अदृष्टत्वात्, एवमज्ञानपरसिद्धान्तस्य

नरदूषणाय प्रवृत्तिर्भवतीत्येवं विवक्षायामस्य प्रवृत्तिरिति । अत्र गोधापदं बिलनिवासिनां सर्पादीनामुपलक्षणं ज्ञेयमिति । साहस्री. ४६८.

**बिल्वखल्वाटन्यायः** । व्याख्यातोऽयं न्यायः श्लोकेन, तद्यथा—खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके, वाञ्छन् देशमनातपं विधिवशाद्बिल्वस्य मूलं गतः । तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः, प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥ 'तत्रापदां भाजनम्' इति वा पाठान्तरमिति । साहस्री. ११३.

**बिल्वविमज्जनन्यायः** । अनवबुद्धार्थे प्रवृत्तिरशक्येति यत्र विवक्षा तत्रायं प्रवर्तते । साहस्री. २२५.

**बीजाङ्कुरन्यायः** । 'अङ्कुरोऽभिनवोद्भिदि' इत्यमरः । बीजं विना नाङ्कुरो जायते, अङ्कुरं विना च न बीजोत्पत्तिरिति । एवं यत्र परस्परकार्य-कारणभावस्तत्रायं न्यायः प्रवर्तते । तथा च बीजजातीयं प्रत्यङ्कुरजातीयम्, अङ्कुरजातीयं च प्रति बीजजातीयं कारणम् । अतो बीजाङ्कुरप्रवाहानादितया च यद्बीजं प्रति यदङ्कुरस्य कारणत्वं तदङ्कुरं प्रति तद्बीजस्य न कारणत्वमतो नान्योन्याश्रयः । एवं च प्रामाणिकत्वात् गृह्यते, यत्र च न प्रामाणिकत्वं तत्र नानादित्वकल्पनेति ।

**बीजवृक्षन्यायः** । यथा बीजात् वृक्षो भवति, वृक्षात् बीजमिति । साहस्री. २१६.

**बुभुक्षितः किं द्विकरेण भुङ्क्ते इति न्यायः** । अयं लालसातिशये वर्तते । यथा 'जागर्ति लोको ज्वलति प्रदीपः सखीजनः पश्यति कौतुकं मे । क्षणै-कमात्रं कुरु कान्त धैर्यं बुभुक्षितः किं द्विकरेण भुङ्क्ते ॥' इति । साहस्री. ६४१.

**बुभुक्षितः किं न करोति पापम् (दरिद्रः किं न कुरुते) इति न्यायः** । साहस्री. ६४३, ६४४.

**बुभुक्षितं न प्रतिभाति किञ्चिदिति न्यायः** । उक्तं च—'जागर्तु लोको ज्वलतु प्रदीपः सखीजनः पश्यतु कौतुकं ते । क्षणैकमात्रं न करोमि धैर्यं बुभुक्षितं न प्रतिभाति किञ्चित् ॥' इति । साहस्री. ६४२.

**बृहस्पतिन्यायः** । सौत्रामण्यादेः अग्निचयनाद्यङ्गता ॥

**ब्राह्मणग्रामन्यायः** । साहस्री. २७.

**ब्राह्मणपरिव्राजकन्यायः** । अयं यत्र सामान्यवाचकं सहप्रयुक्तविशेषवाचक-

पदवत्त्वात्तदर्थोऽन्यपरतया नीयते तत्र प्रवर्तते। यथा 'ब्राह्मणा भोज्यन्ताम्' इत्यत्र परिव्राजकानामपि ब्राह्मणत्वाद्ब्राह्मणपदं परिव्राजकेतरब्राह्मणपरमिति। साहस्री. २०३.

**ब्राह्मणवसिष्ठन्यायः।** यथा 'ब्राह्मणा आयाताः, वसिष्ठोऽप्यायातः' इत्यत्र प्रथमवाक्येनैव ब्राह्मणत्वेन रूपेण वसिष्ठस्याप्यागमनस्य सिद्धौ यद् वसिष्ठोऽप्यायातः' इति वाक्यान्तरं प्रयुज्यते, तत्पूर्ववाक्यघटकब्राह्मणपदोपात्त-वसिष्ठेतरयावद्व्यावृत्तधर्मविशेषबोधनपरतया पर्यवस्यतीति। अस्योदाहरणानि यथा महाभाष्ये 'हलन्त्यम्' (पा० १।३।३)।

**ब्राह्मणश्रमणन्यायः।** यथा श्रमणस्य अशास्त्रीयविधिना त्यक्तशिखासूत्र-कक्षादेस्त्यक्तनित्यादिकर्मणश्च इदानीं ब्राह्मणत्वाभावेऽपि भूतपूर्वेण ब्राह्मणत्वेन निर्देशः, तथा शिवसारूप्यप्राप्तानामपि प्राक्तनया मानवसंज्ञया निर्देश इत्यु-दाहरणसंगतिरिति। साहस्री. १६८.

**भक्षितेऽपि लशुने न व्याधिशान्तिरिति न्यायः।** यत्र कृतेऽपि चानिष्ट-कर्मणि नाभीष्टप्राप्तिस्तत्रास्य प्रवृत्तिः। साहस्री. १९३.

**भक्षितेऽपि लशुने न शान्तो व्याधिः।** अनेन न्यायेन अन्यथाख्यातिपरि-जिहीर्षया भ्रमस्थले विशिष्टज्ञानमपलप्य, प्रवृत्तौ भेदग्रहं कारणमाश्रयतः अनुमितावपि स एव कारणं स्यात् इति अन्यथाख्यातिरूपानुमितेरशक्यप्रति-क्षेपः। परिमल १।१।१, पृ० ब्रसू०।

**भक्ष्यनियमेनाऽभक्ष्यप्रतिषेधो गम्यते इति न्यायः।** यथा 'पञ्च पञ्च नखा भक्ष्या' इत्युक्ते गम्यते एतदन्येऽभक्ष्या इति। साहस्री. ५९५.

**भद्रमभद्रं वा कृतात्मनि प्रकल्पते इति न्यायः।** साहस्री. ६४०.

**भर्छुन्यायः।** यथा—श्रूयते हि लौकिकी गाथा वेदान्तग्रन्थस्था। भर्छुनामा मन्त्री कस्यचिद्राज्ञो बभूव। स च राजाज्ञया दूरदेशस्थराजविरोधिदस्युजन-निग्रहार्थं गतः। तान् हत्वाऽपि तद्देशमर्यादास्थापनार्थं तत्र चिरं विलम्बिते तस्मिन् राजसमीपे तच्छत्रुभूता राजपुरुषा दस्युकर्तृकं भर्छुवधं निखिलनगरे घोषयित्वा राज्ञेऽपि साभिज्ञानं निवेदितवन्तः। आगतानि भर्छुप्रेषितसमाचार-पत्राणि च मार्ग एव विलोपयामासुः। श्रुत्वा च भर्छुवधं राज्ञा सचिवान्तरं कृतम्। ततः कियत्कालानन्तरं कृतकृत्यो भर्छुः स्वपुरमभ्यागच्छन् पथि राज-कृतं सचिवान्तरं श्रुत्वा वैराग्यमाश्रित्य उपशशाम, अध्युवास च वने। तच्छ-त्रुभूताः प्राप्तसचिवाधिकाराः सर्वे ह्यैकमत्येन राज्ञे मृतभर्छुः प्राप्तपिशाच-योनिर्भस्मावगुण्ठितदेहविकरालस्वरूपो निर्जनवने विचरतीति विज्ञापयामासुः।

ततः कदाचित् मदान्धो राजा मृगयानुगतो वने भस्मानुलिप्तशरीरं भद्रं दृष्ट्वा पिशाचतां गतोऽयमिति मेने, तथा प्रकृतेऽपि । साहस्री. ३९४.

**भिक्षुपादप्रसरणन्यायः** । यथा कश्चिद् भिक्षुः यथेष्टान्नाच्छादनवास गृहादिलाभाय धनाढ्यगृहे प्रविष्टो युगपत्तल्लाभं दुर्लभं मन्वानः पूर्वमिह पादप्रसारस्तु मे भवतु पश्चात् परिचयं संपाद्य क्रमेण सर्वं सम्पादयिष्यामीति धिया अल्पां भिक्षां स्वीकरोति, तथा मातेवातिहितैषिणी श्रुतिरद्वैततत्त्वे मुमुक्षोः प्रवेशमिच्छन्ती सकृत् तम् अशक्यं मन्वाना पूर्वोक्तक्रमेण संसारमुक्तये तद् बोधयतीति बोध्यम् । साहस्री. ४३.

**भिक्षुभिया स्थाल्यनधिश्रयणन्यायः** । यथा भिक्षुकभयेन कोऽपि स्थाल्यधिश्रयणं न करोति, तथा स्वतन्त्राविचारेण तत्त्वज्ञानासंभवेनोपदेशकानां च भिक्षुभिया स्थाल्यनधिश्रयणन्यायः । नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । (भामती० १।१।१ ब्रसू० पृ० ७४ । संग्रहः ।

प्रतारकत्वशंकास्पदत्वात् प्रत्युत तेभ्योऽनर्थप्राप्तिशंकासम्भवेन तद् भयेन त्याज्य एव गुर्वधीनो ब्रह्मविचार इति न समीचीनम् । किन्तु शास्त्रोक्तप्रकारेण सम्यक् परीक्षया साधुत्वाऽसाधुत्वनिर्धारणाद् असाधुत्याग-साध्वाश्रयणयोः संभवेन असाधुकृतप्रतारणभिया ब्रह्मविचारो न त्याज्यः इति भावः । साहस्री. ३४७.

**भिक्षुको भिक्षुकान्तरात् लिप्सते इति न्यायः**

**भीमभासदृढन्यायः** ।

दामव्यालकटन्यायो न स्यात् तव कदाचन ।<br>भीमभासदृढन्यायः सर्वदा तेऽस्तु राघव ॥

इत्यादि वासिष्ठे सप्रपञ्चमुपन्यस्तम् । तत्र आद्यस्य (दामव्यालकटन्यायस्य) उच्चैस्तरां दशामापन्नस्यापि अज्ञस्य अतिनीचदशाप्राप्तिः अवश्यं कालेन भवतीति तत्त्वबोधोऽवश्यं संपाद्य इति विवक्षायां प्रवृत्तिः । दामव्यालकटाख्याः त्रयः असुराः शम्बरेण स्वमायया निर्मिताः । ते च तलप्रहारादिना मेर्वादिचूर्णीकरणे शक्ता अपि अज्ञानप्रभावात् कालेन मशकादिकां योनिं प्रापुः इति प्रसिद्धं तत्र । द्वितीयस्य (भीमभासदृढन्यायस्य) तु तत्त्वविन्न कदापि स्वपदात् पततीति विवक्षायां प्रवृत्तिः । यथा भीमभासदृढाख्याः त्रयोऽसुरास्तेनैव शम्बरेण तथा निर्मिताः चिरं जीवन्मुक्तिसुखमनुभूय निर्वाणपदं प्राप्ता इति संक्षेपः । साहस्री. ४०, ४०६.

भुजया शिरोवेष्टनेन नासिकास्पर्श इति न्यायः । यत्र आयासं विना साक्षात् सिध्यन्तमर्थम् उपेक्ष्य आयासेन परम्परया स एवार्थः साध्यते, तत्र अयं न्यायः प्रवतरतीति । साहस्री. २४५.

भ्वादिन्यायः । यथा 'भू सत्तायाम्' इत्यादि धातुर्हि निजनानार्थोपसर्ग-प्रत्ययरूपोपाधिभेदेन नानात्वं भजति, तद् यथा भवतीत्यत्र 'सत्तायां मङ्गले वृद्धौ निवासे व्याप्तिसम्पदोः । अभिव्याप्तौ च शक्तौ च प्रादुर्भावे गतौ च भूः ॥ इत्युक्तार्थभेदेन प्रभावानुभावपरीभवेत्यादौ उपसर्गभेदेन भवनं भूयते भवितेत्यादौ प्रत्ययभेदेन चार्थभेदः प्रतीयते, तथैकमपि ब्रह्म उपाधिभेदेन नानेवावभासते इति । साहस्री. १७८.

भूशैत्यौष्ण्यन्यायः । अयं न्यायः अन्यासाधारणधर्मस्य अन्यत्र आरोप-विवक्षायां प्रवर्त्तते । साहस्री ३७३.

भूतं भव्यायोपदिश्यते इति न्यायः । अयं मीमांसान्यायप्रकाशे धृतः । तथाहि, किं द्रव्यगुणयोः फलभावनाकरणत्वमुत धात्वर्थस्य इति भावार्थाधिकरणे (२।१।१।१-४) सन्दिह्य द्रव्यगुणयोरेव भावनाकरणत्वं भूतं भव्यायोपदिश्यते इति न्यायाद् इत्याशंक्य धात्वर्थस्यैव भावनाकरणत्वमित्युक्तं तत्र इति । साहस्री. ८५३.

भूतं भव्याय कल्पते इति न्यायः । साहस्री. ७७७.

भूयोऽनुग्रहन्यायः । बह्वनुग्रहन्यायः । प्रधानेषु सहानुष्ठीयमानेषु धर्मविरोधे भूयोऽनुरोधेन धर्माणामनुष्ठानम् ।

भूयस्त्वात् तद्वाद इति न्यायः । यत्रेतरवस्तुसत्त्वेऽपि यस्य वस्तुनो बाहुल्यं प्रवर्त्तते । स्पष्टम् । साहस्री. ७५९.

भूलिंगशकुनिन्यायः । हिमाचलप्रान्तदेशे भूलिंगाख्यः पक्षी 'मा साहसं कुरु' इति पुनः पुनरुच्चैर्वदन् सिंहदंष्ट्राग्रलग्नं मांसं जिघृक्षतीति प्रसिद्धम्, तथा परोपदेशमात्रकुशलः स्वयं च यथेष्टाचरणशीलो दाम्भिकस्त्याज्य एवेति भावः । उक्तं च महाभारते—न गाथा गाथिनं शास्ति बहु चेदपि गायति । प्रकृतिं यान्ति भूतानि भूलिंगशकुनिर्यथा ॥ इति । साहस्री. ३४०.

भेकोऽपि यावत्प्रसाराय चेष्टते इति न्यायः । असमर्थस्य समर्थार्हकर्मकरण-समीहने अयमवतरति । साहस्री० ८०४

भेर्याघातन्यायः । तद् यथा भेर्याघाते भेरीमाहत्य कश्चिद् विंशतिपदानि गच्छति, कश्चिद् त्रिंशत्, कश्चिद् चत्वारिंशत्, एवं प्रकृतेऽपि । साहस्री. ३०८.

**भैरवविप्रन्यायः** भर्स्नुन्यायवदेव अयम् । साहस्री. ३६५.

**भ्रमरन्यायः** ।। 'यथा भ्रमरो हि पुष्पाणां कण्टकादींस्त्यक्त्वा गन्धगुण-मात्रमादत्ते, तथा प्रकृतेऽपि । ३२३.

**भ्रष्टावसरन्यायः** । यथा केनचित् कञ्चित् प्रति उक्तम्, 'त्वया अमुका-वसरेऽत्रागन्तव्यम्, तव अभीष्टसिद्धिर्भविष्यति, ह्यन्यथा न' । एवं प्रतिज्ञातावसरे स न आयातः, भ्रष्टावसरत्वात् तस्य अभीष्टसिद्धिः न जाता तथा प्रकृतेऽपि । साहस्री. ३५.

**मक्षिकान्यायः** । यथा मक्षिका हि सर्वं देहं परिहृत्य व्रणस्थानमेवावलम्बते, तथा दुष्टोऽपि । साहस्री. ३२८.

**मक्षिकास्थाने मक्षिकापात इति न्यायः** । अयं यादृशे तादृशकरणविषये प्रवर्तते । साहस्री. ७५१.

**मज्जनोन्मज्जनन्यायः** । यथा नद्यादौ पतितस्तरणानभिज्ञः कदाचिन्मज्जति कदाचिदुन्मज्जति, तथा संसारसमुद्रे पतितो ब्रह्मतत्त्वानभिज्ञो जीवः तावद् मज्जति शान्तिसुखं न प्राप्नोति यावद्भगवच्चरणारविन्दाश्रयो न भवेत् । साहस्री. ७.

**मञ्जूषाऽऽखुन्यायः** । अयं न्यायः इष्टार्थसमुद्यमे अनिष्टार्थप्राप्तिविषये सञ्चरति । यथा कदाचित्कश्चिन्मूषको भक्षणाऽऽशया सर्पमञ्जूषां दृष्ट्वा प्रविष्टस्तत्र तेन भक्षित इति । साहस्री. ६७८.

**मणिप्रदीपप्रभान्यायः** । मणिश्च प्रदीपश्च मणिप्रदीपौ, तयोः प्रभा मणिप्रदीपप्रभा । यथा कस्मिंश्चिन्मन्दिरे अपवरकस्य अन्तः दीपस्तिष्ठति तस्य प्रभा बहिर्द्वारप्रदेशे रत्नमिव वर्तुला ह्युपलभ्यते, तथाऽन्यस्मिन् मन्दिरेऽपवर-कस्यान्तःस्थितस्य रत्नस्य प्रभा बहिर्द्वारप्रदेशे दीपप्रभेव रत्नसमानोपलभ्यते, तथाविधं प्रभाद्वयं दूरतो दृष्ट्वाऽयं मणिरयं मणिरिति बुद्ध्या द्वौ पुरुषा-वभिधावनं कुरुतस्तयोर्द्वयोरपि प्रभाविषये जायमानं मणिज्ञानं भ्रान्तमेव ।

**मणिप्रवालन्यायः** । मालायाम् एकः सौवर्णो मणिः एकः प्रवालः पुनर्मणिः पुनः प्रवालः इति ग्रथनरीतिः । तथा वालखिल्यसूक्तेषु प्रथमा बृहती (८।८। १२।८) द्वितीया सतोबृहती इत्येवं मणिप्रवालन्यायेन एकान्तरपठिताः । ऐब्रासा० ३।२।५ ।

**मणिमन्त्रन्यायः** । यथा मणिमन्त्रादीनां वह्नेः दाहं प्रति स्वातन्त्र्येण प्रतिबन्धकत्वं लोकप्रसिद्धम्, न च तत्र युक्त्यपेक्षा, एवं कामिनो जिज्ञासाया

अपि ज्ञानमात्रं प्रति प्रतिबन्धकत्वम् । इत्येवं यत्र पृथक्प्रतिबन्धकत्वम्, तत्रास्य प्रवृत्तिरिति । साहस्री· ४६६·

**मण्डूकतोलनन्यायः** । यथा मण्डूकतोलने तुलास्था मण्डूकास्तुलातः उत्प्लुत्योत्प्लुत्य पतन्ति तथा प्रकृतेऽपीति बोध्यम् । साहस्री. ६०.

**मण्डूकप्लुतिन्यायः** । यथा मण्डूकाः उत्प्लुत्योत्प्लुत्य गच्छन्ति, तद्वत्प्रकृतेऽपि । अयम् 'इको गुणवृद्धी ।' पा० १।१।३ इति सूत्रमहाभाष्येऽभिहितः । साहस्री. ४३६.

**मत्तकाशिन्या दृष्टा तिर्यक्षु कामितेति न्यायः** । अयं न्यायो यत्र अधिकार्थलाभे अल्पार्थे वृत्तिरिति विवक्षा तत्र प्रवर्तते । मत्तकाशिनी स्त्रीविशेषः । साहस्री. ४७७.

**मत्स्यकण्टकन्यायः** । यथा मत्स्यमांसार्थी तत्सम्बद्धान् कण्टकादीनपि तावत् गृह्णाति, त्यजति च तस्मिन् गृहीते, तथा तत्त्वम्पदलक्ष्यार्थजिघृक्षया तदुपाधी अपि गृह्येते, त्यज्येते च । भागत्यागलक्षणया सति लक्ष्यार्थग्रहे । 'तस्यापत्यम्' (पा० ४।१।१२) इतिसूत्रमहाभाष्ये अयमुक्तः ।

**मधुकरराजमधुमक्षिकान्यायः** । यथा मधुकरराजं मधुमक्षिका अनुवर्तन्ते, तथेन्द्रियाणि चित्तमिति योगशास्त्रे विस्तरः । साहस्री. ८७१.

**मधुमक्षिकन्यायः** । सा हि रसगुणमेवादत्ते न कण्टकादि, तथा सज्जनः गुणमात्रं गृह्णाति न दोषान् । संग्रहः ।

**मधुररसभाविताम्रबीजन्यायः** । यथा मधुररसभावितानामाम्रबीजानां परिकर्षितायां धरायामुप्तानाम् अङ्कुरकाण्डस्कन्धशाखापल्लवादिषु तद्द्वारा परम्परया फले माधुर्यनियमः, तथा प्रकृतेऽपि । साहस्री. ६६६.

**मध्यदीपकन्यायः** 'मध्यमणिवत्' अस्य न्यायस्य प्रवृत्तिः । साहस्री· ६७३·

**मध्यमणिन्यायः** । यथा नासिकालङ्कारमुक्ताफलयोर्मध्ये संयोजितो लोहितको मणिः मौक्तिकं स्वप्रभया भूषयतीति प्रसिद्धम् । साहस्री· २४७.

**मनोराज्यविजृम्भणन्यायः** । स्वचित्तपरिकल्पितमनोरथविकाश इत्यर्थः ।

**'मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः'** इति न्यायः । अस्यार्थः— सुहृदां मित्राणां ये अभ्युपेतार्थकृत्याः अङ्गीकृतपरकार्यकरणदृढप्रतिज्ञाः सत्पुरुषास्ते न मन्दायन्ते नाऽऽलस्यं कुर्वन्ति इति । साहस्री· ६७६.

**मरणाद्वरं व्याधिरिति न्यायः** । साहस्री. १४२.

**मर्कटमदिरापानादिन्यायः** । साहस्री· ६४०.

मलिनदर्पणन्यायः। 'संसर्गजा दोषगुणा भवन्ति' इति न्यायेन समानार्थोऽयं तत्रैव द्रष्टव्यः। साहस्री. १००.

मल्लग्रामन्यायः। यथा अन्येष्वपि जनेषु सत्सु मल्लानां बहुत्वात् मल्लग्राम इत्युच्यते, तथा प्रकृतेऽपि। साहस्री. २६.

महान्महत्स्वेव करोति विक्रममिति न्यायः। अयं महान् जनो महत्सु जनेष्वेव पराक्रमं करोति, न दुर्बलेष्विति भावविवक्षायामवतरति। साहस्री. ७९४.

महादोषत्यागोऽल्पदोषाङ्गीकारो यथा लोकप्रसिद्धिरिति न्यायः। साहस्री. ५६२.

महामत्स्यतीरन्यायः। श्रौतोऽयं न्यायः। यथा महामत्स्यस्तीरात्तीरं संचरन् तीराद्भिन्न एव, न त्वभिन्नो नापि तेन तीरेण लिप्यते, एवम् आध्यात्मिकसम्बन्धेन देहात्मा जाग्रदादौ संचरन् तस्माद्भिन्न एव, नापि जाग्रदादिरूपधर्मवान् वा। तथा च श्रुतिः 'महामत्स्य उभे कूले संचरति, पूर्वं चापरं चैवमेवायं पुरुष एतान् सञ्चरति, स्वप्नान्तं बुद्धान्तं च' इति। साहस्री. ८९७.

महिषी प्रसवोन्मुखी महिषो मदनातुर इति न्यायः। यत्र केचित् महामूर्खा मृतम्लेच्छाद्यधमजातिस्थानानि स्वस्वकुलदैवतानि स्वाभिलषितप्रदानि च मत्वा म्लेच्छाद्यधमजातिनीचयोनिप्राप्त्या अतिदुःखितेभ्योऽपि स्वभीष्टं याचन्ते, तत्रास्य प्रवृत्तिरिति। उक्तं च रावणमारीचसंवादविषये। तं मारीचं प्राप्य भीरुकं दशाननः प्रागुदाजहार। सीतामीहे हर्तुमत्र मे रणे सहायो भवार्थकार॥ कुत्ता गेवे दर्द देह की। मीयाँ कहे तुम चलो शिकार॥ इति। साहस्री. ८१.

'माजीवन् यः परावज्ञादुःखदग्धोऽपि जीवति इति न्यायः। उक्तं च माघकविना 'माजीवन् यः परावज्ञादुःखदग्धोऽपि जीवति। तस्याऽजननिरेवास्तु जननीक्लेशकारिणः॥' साहस्री ९०३.

मात्स्यन्यायः। प्रबलमत्स्या निर्बलांस्तान् नाशयन्तीति न्यायार्थः।

मानाधीना मेयसिद्धिरिति (प्रमाणाधीना प्रमेयसिद्धिरिति वा)। साहस्री. ४६६.

मायिका गुणा वास्तवं निर्गुणत्वं न विघ्नन्तीति न्यायः। यथा सत्यकामादिगुणा अपाणिपाद इति प्रकृतिनिर्गुणत्वमीश्वरस्य न निवारयन्तीति भावः। साहस्री. ७८५.

मारणाय गृहीतोऽङ्कुच्छेदं स्वीकरोतीति न्यायः। स्पष्टम्। साहस्री. १४१.

**मार्दवे बहवो दोषा इति न्यायः ।** अयं च माघकविना विवृतः प्रकारान्तरेण । तथाहि 'तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् । हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥' इति । साहस्री. ८३०.

**मालतीपुष्पमश्मना हन्तुमीहते इति न्यायः ।** मालतीति पुष्पविशेषस्य नाम । तामश्मना पाषाणेन हन्तुमीहते यतते इति भावः । अयोग्यसंमेलने अस्य प्रचारः इति । साहस्री० ७३७.

**माल्यं कस्य विचित्रपुष्परचितं प्रीत्यै न संजायते इति न्यायः ।** सर्वसुन्दरपदार्थे सर्वजनाभिरुचिस्वविवक्षायामवतरत्ययम् । साहस्री. ८८१.

**मुखमस्तीति वक्तव्यं दशहस्ता हरीतकी इति न्यायः ।** अयम् असम्भववस्तुवक्तरि जने आक्षेपरूपः इति । साहस्री. ५८४.

**मुख्यानुग्रहन्यायः ।** मुख्यद्रव्यापचारे गृहीते प्रतिनिधौ पुनर्मुख्यप्राप्तौ मुख्यस्यैवोपादानम् ।

**मुञ्जाविषीकोद्धरणन्यायः ।** यथा मुञ्जाख्यतृणादिषीकाख्यं गर्भस्थं मृदु तृणं बहिरावरणकतया स्थितानां मुञ्जाख्यतृणानां विभजनेन समुद्ध्रियते तथा आत्मा अपि युक्त्या अन्वयव्यतिरेकलक्षणोपायेन शरीरत्रितयात् ब्रह्मचर्यादिसाधनसम्पन्नैः पृथक् कृतश्चेत्स परब्रह्मैव जायते, चिदानन्दरूपत्वस्य लक्षणस्योभयोरविशिष्टत्वात् । उक्तं च पञ्चदश्याम्—'यथा मुञ्जादिषीकैवमात्मा युक्त्या समुद्धृतः । शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥' इति । साहस्री. २२.

**यदन्तरेण यन्न सम्भवति तस्य तदर्थत्वं तदपेक्षमिति न्यायः ।** यथा—न हि ज्ञानमन्तरेण कर्मानुष्ठानं सम्भवतीति । साहस्री. ८५५.

**यदसन्दिग्धमप्रयोजनं न च तत्प्रेक्षावत्प्रतिपित्सागोचरम्, यथा समनस्केन्द्रियसन्निकृष्टः स्पष्टालोकमध्यासीनो घटः इति न्यायः ।** 'यदसन्दिग्ध० घटः' इति न्यायेन विषयप्रयोजनयोरसम्भवेन विचारशास्त्रमनारभ्यमितिपूर्व पक्षः इति सर्वदर्शनसंग्रहे जैमिनीये । (अत्र साहस्र्यां 'मध्यासीनो घट, इति न्यायः इति न्यायनाम विद्यते तस्य अनुपपन्नत्वात् अस्माभिः परिवृत्तिः कृतेति ध्येयम्) । साहस्री. ७२१.

**यत्कार्यं जायते यस्मात्तस्मिस्तत्प्रतितिष्ठतीति न्यायः ।** यथा 'मृत्तिकायां घटस्तन्तौ पटः स्वर्णे अङ्गुलीयकम्' इति वैशेषिकाः प्राहुस्तथा नैयायिका अपि । इति । साहस्री. ९०८.

**यत्कृतकं तदनित्यमिति न्यायः।** कृतकं कार्यम्, जन्यभाव इति यावत्। तथा च कार्यमात्रस्योत्पत्तेः प्रागसत्त्वेन प्रागभावप्रतियोगित्वान्न प्रागभावाप्रतियोगित्वघटितनित्यत्वम्। ध्वंसस्य प्रागभावप्रतियोगित्वेऽपि भाववत्त्वाभावान्न व्यभिचार इति तार्किकाः। वेदान्तिमते तु ध्वंसस्यापि नाशाभ्युपगमेन न विशेषणीयमिति भेदः। साहस्री. ४६१.

**यच्च स्तूयते तद्विधीयते इति न्यायः।** अनेन अध्ययनवदर्थज्ञानस्यापि विधिरभ्युपगन्तव्य इत्युक्तं महाभारते उपोद्घाते। साहस्री. ७६६.

**यद् दृष्टं दृश्यते स्वप्नेऽननुभूतं कदापि नेति न्यायः।** स्पष्टोऽयम्। साहस्री. ६७४.

**यन्निवृत्तिमद्वस्तु तदुत्पत्तिमदपीति न्यायः।** 'ध्रुवं जन्म मृतस्य च' इति भगवद्वाक्यमस्मिन् न्याये बीजम्। साहस्री. २६२.

**यद्यथा वर्तते तस्य तथात्वं याति मानतः इति न्यायः।** यत् शुक्त्यादि यथा येन शुक्तिकादिरूपेण वर्तते, तस्य तथात्वं शुक्त्यादिरूपत्वं प्रमाणतः स्फुरतीत्यर्थः। उक्तं च—'यद्यथा वर्तते तस्य तथात्वं भाति मानतः। अन्यथात्वं भ्रमेणेति न्यायोऽयं सार्वलौकिकः॥' इति। साहस्री. ५५१.

**यद्यदा यन्न करोति तत्तदा तत्राऽसमर्थमिति न्यायः।** यथा हि—शिलाशकलमङ्कुरे इति संग्रहे बौद्धे। साहस्री. ६१७.

**यद्यदा यत्करणसमर्थं तत्तदा तत्करोतीति न्यायः।** यथा—'सामग्री स्वकार्यं (कर्तुं) समर्था' इति। सामग्री कारणसमूह इत्यर्थः इति तत्र बौद्धे। साहस्री. ६६६.

**यः कल्पः स कल्पपूर्वक इति न्यायः।** एवं हि संसारस्यानादित्वात् ईश्वरस्य च सर्वज्ञत्वादीश्वरो गतकल्पीयं वेदमस्मिन् काले स्मृत्वोपदिशतीति भावः। 'यथापूर्वमकल्पयत्' इति श्रुतिरिति। साहस्री. ४७१.

**यः कारयति स करोत्येवेति न्यायः।** कारयितुः कर्तृत्वमिति। यथा राजादिर्हि भृत्यैः युद्धादिकं कारयन् स्वयं करोतीति प्रसिद्धः तथा प्रकृतेऽपि। साहस्री. ५८.

**यः कुरुते स भुङ्क्ते इति न्यायः।** स्पष्टार्थः साहस्री. १०७.

**यो यद्वपति बीजं हि लभते सोऽपि तत्फलमिति न्यायः।** स्पष्टः। साहस्री. ७३६.

**यो यं प्रति सेव्यः स तस्माद्भिन्न इति न्यायः।** तत्र तथाहि अनुमानेनापि जीवेश्वरयोर्भेदोऽवसीयते। परमेश्वरो जीवाद्भिन्नः तं प्रति सेव्यत्वात्। यो यं प्रति सेव्यः स तस्माद्भिन्नः, यथा भृत्याद्राजा।

**यो यस्य प्रसङ्गे लभतेऽसौ तत्कृतानि कार्याणीति न्यायः।** तद्यथा—उपाध्यायस्य शिष्यो याज्यकुलानि गत्वाऽग्रासनादीनि लभते, एवं प्रकृतान्तरेऽपि बोध्यम्। अयं 'स्थानिवदादेशोऽनल्विधौ' १।१।५६ इति सूत्रभाष्ये स्पष्टः। साहस्री. ८३३.

**यो यस्य मित्रं नहि तस्य दूरमिति न्यायः।** स्पष्टः। साहस्री. ६८०.

**यो वै चित्तेन दूरस्थः समीपस्थो हि दूरतः इति न्यायः।** साहस्री. ६७६.

**यो हि भुक्तवन्तं प्रति ब्रूयान्मा भुक्था इति किं तेन कृतं स्यादिति न्यायः।** अयं 'स्थानेऽन्तरतमः' १।१।५० इति सूत्रमहाभाष्ये 'अनर्थकं च' इति वार्तिकव्याख्यावसरे ह्युदाहृतः। भुक्था इति निरनुस्वारपाठ इति बोध्यम्। साहस्री. ४३०.

**येनोपक्रम्यते येन चोपसंह्रियते स वाक्यार्थ इति न्यायः।** यथा—'उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥

**येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति न्यायः।** प्राप्तमिति भावे क्तः, येन नाप्राप्ते इत्यस्य यत्कर्तृकावश्यप्राप्ताविव्यर्थः, नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात्। अयं हि विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्न-वृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाधो यत्र, तत्र प्रवर्तते। सामान्यशास्त्रस्याप्राप्तियोगोऽचारितार्थ्यं हि विशेषशास्त्रस्य बाधकत्वे बीजमिति। साहस्री. २२३.

**यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यङ्न वेद सः इति न्यायः।** यथा-यस्याऽनात्मनि देहादावात्मत्वभ्रमोऽस्ति तस्याज्ञानमस्तीति कल्प्यते इति। साहस्री. ३८५.

**यस्य दण्डस्तस्य महिषीति न्यायः।** लौकिकगाथारूपोऽयम्। साहस्री.

**येषां पुनरवयवा अनर्थकाः समुदाया अपि तेषामनर्थका इति न्यायः।** तद्यथा—एकोऽन्धो दर्शनेऽसमर्थस्तत्समुदायश्च शतमपि दर्शनेऽसमर्थम्, एका सिकता तैलदानेऽसमर्था, तत्समुदायश्च खारीशतमप्यसमर्थम्। साहस्री. ६०४.

**येषां संघाता अर्थवन्तोऽवयवा अपि तेषामर्थवन्त इति न्यायः।** तद्यथा—'एकश्चक्षुष्मान् दर्शने समर्थस्तत्समुदायश्च शतमपि समर्थम्, एकश्च तिलस्तैल-

दाने समर्थस्तत्समुदायश्च खारीशतमपि समर्थम् 'इत्ययं 'हयवरट्' सूत्रमहाभाष्ये स्पष्टः। साहस्री. ६०३.

**यदन्नः पुरुषो लोके तदन्नास्तस्य देवताः इति न्यायः।** यथा-विश्वामित्रर्षिः श्वजाघनीं श्वपचगृहादाहृत्येन्द्रादिदेवोद्देशेन त्यक्त्वा भोक्ष्यामीति मनसि कृत्वा यदा यथादैवतं तद्भागांस्त्यक्तुं प्रवृत्तस्तदा तुष्टैरिन्द्रादिभिर्वृष्टिः सृष्टा, सस्यं च तत्क्षणमेव प्रभूतमभूदित्याख्यायिका पुराणेषु स्मर्यते इत्यन्यत्र विस्तरः। साहस्री. ६३३.

**यद्ग्रहे यदपेक्षं चक्षुस्तदभावग्रहेऽपि तदपेक्षते इति न्यायः।** आलोकग्रहे आलोकापेक्षाया अभावेन तदभावग्रहेऽपि तदपेक्षाया अभावादिति। सर्वदर्शनसंग्रहे औलूक्ये विस्तरः। साहस्री. ६१६

**यत्परः शब्दः स शब्दार्थः इति न्यायः।** यः अर्थः परः तात्पर्यविषयो यस्य स यत्परः। स्पष्टमन्यत्। साहस्री. ७८४, मणि० पृ० ८१.

**यद्विवाहस्तद्गीतगानमिति न्यायः।** यथा यद्वधूवरयोर्विवाहो भवति लोके गानमपि तत्संबन्धि गीयते, नान्यदिति तथा तत्तद्देवतापुराणादिषु। तत्तद्देवतामाहात्म्यवचनानि ह्युपपद्यन्ते इति नापि क्षतिर्नापि परस्परं विरोधः पुराणानामिति। साहस्री. ४६४.

**यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपीति न्यायः।** यथा—तार्किकाणां घटत्वकुलालकृतित्वादिना कार्यकारणभावे सिद्धे. कार्यत्वेन कृतित्वेन च कार्यकारणभावः, न तु कुलालकृतेर्जातित्वेन द्रव्यत्वेन घटादिकं प्रति कारणत्वम्, तथात्वे तयोरन्यथासिद्धित्वेनाकारणत्वं स्यात्, कारणतां प्रत्यन्यथासिद्धेर्बाधकत्वात्। अत एव न द्रव्यत्वेन दण्डादेर्घटादिकं प्रति कारणत्वम्, नापीन्द्रियत्वेन प्रत्यक्षत्वावच्छिन्नं प्रति इन्द्रियत्वस्यैकस्याऽभावादिति। साहस्री. ५००.

**यत्रार्थावगतिरेव नास्ति, तत्र सन्देहस्य का कथेति न्यायः।** सर्वदर्शनसंग्रहे जैमिनीये स्पष्टः। साहस्री. ७२०.

**यत्रोभयोः समो दोषो न तत्रैकोऽनुयोज्यः इति न्यायः।** साहस्री. १४०.

**यत्रोभयोः समो दोषः परिहारोऽपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे॥ इति न्यायः।** अयं सांख्यप्रवचनभाष्यधृतः। यत्र वादिप्रतिवादिभ्यां न्यस्तपक्षयोस्तुल्यदोषः न तत्रैकः पर्यनुयोज्यः, स्वपक्षेऽपि तद्दोषसत्त्वात् इत्येवं यत्र विवक्षा तत्रास्य प्रवृत्तिरिति। साहस्री. १३९.

यथोत्तरं मुनीनां प्रामाण्यम् इति न्यायः। (उत्तरोत्तरं मुनीनां प्रामाण्यम्' इत्यत्र द्रष्टव्यम्)। कौ० १।३।८।२७ पृ० १३१.

यथासंख्यन्यायः। अयं 'यथासंख्यमनुदेशः समानाम्' (१।३।१०) इति पाणिनिसूत्रसिद्धः।

यादृशं तादृशमेव साधयतीति न्यायः॥ चौरान्वेषणे चौर एव प्रयोक्तव्यः इति न्यायः। साहस्री. ६६१-६६२.

यादृशं मुखं तादृशी चपेटिकेति न्यायः। तुल्यरूपोपहारविवक्षायामस्य अवतार इति। साहस्री. १४७.

यादृशो यक्षस्तादृशो बलिरिति न्यायः। तुल्यरूपपरिहारविवक्षायामस्य प्रवृत्तिरिति। साहस्री. १४६.

यादृशी भावना यस्य सिद्धिर्भवति तादृशीति न्यायः। साहस्री. ८१०.

यादृशी शीतला देवी तादृशः खरवाहन इति न्यायः। अयं तुल्यस्वरूप-विवक्षायामवतरतीति। साहस्री. १४५.

यावत् तैलं तावद्व्याख्यानमिति न्यायः। साहस्री. ४०७.

यावच्छिरस्तावती शिरोव्यथेति न्यायः। साहस्री. २६९.

यावत्स्नानं तावत्पुण्यमिति न्यायः। साहस्री. ४०८.

यावत्संपातमुषित्वेति न्यायः। यावत्पुण्यफलानुभूतिनिर्णयस्तावत्पर्यन्तं स्वर्गभोगाननुभवन्ति सुकर्मिण इति। साहस्री. ५४२.

युगपदेव विशेष्ये विशेषणं तत्रैव च विशेषणान्तरमिति न्यायः। यथा— 'तरति शोकमात्मवित्' इत्यादौ प्राचीनतार्किकमतमाश्रित्याऽखिलपदार्थस्मरणात्। प्रकृतन्यायेन सर्वपदार्थानामन्योन्यं क्रियाकर्मभावेनान्वयरूपः शाब्दबोधो भवतीति संक्षेपः। साहस्री. १८२.

यूकाभिया कन्थाऽमोक्षणन्यायः। उक्तं च 'काव्ये शुभे विरचिते खलु नो खलेभ्यः कश्चिद् गुणो भवति यद्यपि सम्प्रतीह। कुर्यां तथापि सुजनार्थमिदं यतः किं यूकाभयेन परिधानविमोक्षणं स्यात्॥' इति। साहस्री.

योगाद्रूढिर्बलीयसीति न्यायः। योगादित्यस्य यौगिकात्प्रकृतिप्रत्यययोग-लभ्यार्थवाचकादित्यर्थः। रूढिस्तु प्रकृतिप्रत्ययार्थमनपेक्ष्य शाब्दबोधजनकशब्दात्मिका इति। साहस्री. ६५६.

योग्यो योग्येन संबध्यते इति न्यायः। यथा—दृश्यते हि लोकेऽन्योन्य-

योग्यानामेव नरपतिपशुपक्षिप्रभृतीनां मिथुनत्वादिसंबन्धः इति । साहस्री. २७७.

**योग्यप्रयुक्तं साधनं कार्यसाधकमिति न्यायः।** यथा—नाहं कर्म करोमीत्यभिमानवन्मूढतमकृतत्वात्संन्यासस्य, तदपेक्षया परमेश्वरमाराध्याहं तरिष्यामीतीश्वरार्पणबुद्धया निरभिमानिना मुमुक्षुणा क्रियमाणत्वात् कर्म ज्यायः इति भावः। अत एवोक्तं भगवता 'नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः' इति । साहस्री. ५२८.

**योजनप्रायायां कावेर्यां मल्लबन्धनन्यायः।** यथा कावेर्याख्यायां नद्यां योजनेन योजनचलनेन प्रायायां मल्लस्य कैवर्तकस्य बन्धनं न युज्यते, तथा प्रकृतेऽपीत्यर्थः इति केचित्। अन्ये तु—मल्लो बाहुयुद्धकुशलस्तद्वदधोलम्बितवाससां कटौ बन्धनं यथा योजनप्रायायां तस्यामयुक्तं तथेत्याहुरिति । साहस्री. ५९.

**रक्तपटन्यायः।** यदा तु निराकाङ्क्षेऽपि वाक्ये आकाङ्क्षामुत्थाप्य एकवाक्यता क्रियते, तदा रक्तपटन्यायप्रवृत्तिः।

**रथ्यादीपन्यायः।** यथा रथ्यायां प्राक्पश्चाच्च नीयमानस्य दीपस्याऽग्रे दीपप्रभा यस्मिन् प्रदेशे गच्छति तस्मिन्नेव प्रदेशे क्षणान्तरे दीपोऽपि गच्छत्येवंविधविवक्षा यत्र तत्रायं प्रवर्तते । साहस्री. ५६५.

**रश्मितृणादिन्यायः।** यथाऽऽदित्यरश्मयः स्वभावतस्तृणादेर्भासका अपि, सूर्यकान्तमण्यारूढास्तद्दाहका भवन्ति, तथा प्रकृतेऽपि । साहस्री. ८०२.

**राजपुत्रव्याधन्यायः।** यथा कश्चिद्राजपुत्रः स्वमातृसपत्न्या कयाचित्क्वचिन्निक्षिप्तो व्याधवशं प्राप्तः। तेन च पुत्रत्वेन पालितः सः, व्याधमेवात्मानं मन्यते स्म, पश्चात्कथंचिद्राजपुत्रनिश्चयवतां मन्त्रिणामुपदेशाद्राजानमात्मानं मत्वा पैतृकसिंहासने प्रतिष्ठां प्रापेति । साहस्री. ३५७.

**राजपुरप्रवेशन्यायः।** यथात्र क्रमेणैव बहूनां पुरुषाणां प्रवेशो भवति न युगपत् । तथा-यथा विशृङ्खलतया राजपुरप्रवेशे राजपुररक्षकैस्ताडनादिकं क्रियते इति भिया श्रेणीभूततया तत्पुरप्रवेशः, एवं सुशृङ्खलतया यत्र कार्यकारणस्य विवक्षा तत्रास्य प्रवृत्तिः। साहस्री. १८५.

**राजसं तामसं चैव दूरतः परिवर्जयेदिति न्यायः।** साहस्री. १०२.

**राजसूयन्यायः।** राजसूयशब्दवाक्यानां यागानामेव फलार्थत्वम् ।

**रात्रौ दीपशिखाकान्तिर्न भानावुदिते सति इति न्यायः।** यथा सूर्योदये दीपशिखा न शोभते, तथा गुणवत्तरसंनिधाने गुणवान्नाद्रियते इत्यर्थविवक्षायामस्य प्रचार इति । साहस्री. ६९८.

रासभरुतन्यायः। यथा गर्दभशब्दः आदावत्युच्चैरुपश्रूयते, पश्चात् मन्दतां प्राप्नुवन् क्रमेण परिक्षीयते, तथा नीचप्रीतिरपि पुरा वृद्धिं प्राप्य पश्चात्क्रमेण क्षीयते इति भावः। साहस्री. ३३०.

राहोः शिर इति न्यायः। अयं न्यायो भाष्यप्रदीपोद्योतयोः कैयटनागोजिभट्टाभ्यामुदाहृतः। अत्र कैयटः—'यथा राहोः शिरः इत्येकस्मिन्नपि वस्तुनि शब्दार्थभेदव्यवहारः, एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृतिक्रियायां करणरूपत्वमुच्यते। सूत्रशब्देन तु समुदायरूपतेति भेदव्यवहार उपपद्यते, इति। अत्र शब्दार्थभेदादिति प्रतीकमादाय नागेशः—'अनेकावस्थायुक्तं शिरोराहुशब्दार्थः, यत्किञ्चिदेकावस्थायुक्तं शिरः-शब्दार्थः, तादृशराहुशब्दार्थस्य तादृशशिरःपदार्थोऽवयवः इति षष्ठ्यर्थोपपत्तिरिति भावः। साहस्री. ४६०.

रूढिर्योगमपहरतीति न्यायः। यथा यत्राऽन्यत्रातिप्रसक्तादवयवार्थालोचने सव्यपेक्षाच्च योगात्समुदायशक्तेः प्राबल्यं विवक्ष्यते, तत्रायं प्रवर्तते।

रूपसामान्यन्यायः। तद्यथा—तानेव शाटकानाच्छादयामो ये मथुरायाम्, तानेव शालीन् भुञ्ज्महे ये मगधेषु, तदेवेदं भवतः कार्षापणं यन्मथुरायां गृहीतमित्यादि। अन्यस्मिंश्चान्यस्मिंश्च रूपसामान्यात्तदेवेदमिति भवतीति 'अइउण्' इति सूत्रमहाभाष्ये उक्तः। साहस्री. ६०२.

रेखागवयन्यायः। यथा केनचित् ग्रामीणेन पृष्टो वन्यो हि कीदृशो गवय इति। स तं लिखित्वा दर्शयामास, अयं गवयो भवतीति।

रोगिन्यायः। यथा रोगिनाशे रोगस्याऽपि नाशस्तथा प्रकृतेऽपि। साहस्री. ३१५.

लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति न्यायः। लक्ष्यते ज्ञायते पदार्थोऽनेन 'लक्षदर्शनाङ्कनयोः' करणे ल्युट्। लक्षणमसाधारणो धर्मः। तद्विविधम्-इतरभेदानुमापकं व्यवहारप्रयोजकं चेति नैयायिकाः।

लक्ष्याश्रयेण तु लक्षणव्यवस्थापनं गत्यन्तराभावादिति न्यायः। साहस्री. ६८५

लपोरशङ्खन्यायः। अयं श्लोकबद्धः। यथा-'शङ्खिनी काञ्चनं दद्यादहं शङ्खो लपोरकः। वदामि बहुवाक्यानि न ददामि कपर्दिकाम्॥' इति। 'लपतीति लपोरकः। "लप व्यक्तायां वाचि" साहस्री. ९३८

लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना। अध्ययनविधिना न स्वर्गाद्यर्थम् अध्ययनं विधीयते 'लभ्य० कल्पना' इति न्यायेन दृष्टफलसंभवे अदृष्टफल-

कल्पनाया अन्याय्यत्वात् । वैद्यनाथः १।१।१

**लाक्षारसावसिक्तकार्पासबीजन्यायः** । यथा लाक्षारसावसिक्तकार्पासबीजानाम् अङ्कुरादिपारम्पर्येण कार्पासादौ रक्तिमनियम इति । यथोक्तम्—'यस्मिन्नेव हि संताने ह्याहिता कर्मवासना । फलं तत्रैव बध्नाति कर्पासे रक्तता यथा ॥' इत्यादि सर्वदर्शनसंग्रहे आर्हतनये । साहस्री. ६००.

**लाघवन्यायः** (अयमेव आग्नेयीन्यायः ३।२।८।२१-२४) । लाघवाख्यन्यायस्य नियामकता युक्ता ।

**लाङ्गलं जीवनमिति न्यायः** । लाङ्गलं हलं जीवनस्य निमित्तमिति गम्यते । साहस्री. १९२.

**लोष्टप्रस्तरन्यायः** । लोष्टो मृत्पिण्डः । प्रस्तरः पाषाणः । यत्र लघुतरवस्त्वपेक्षया गुरुतरवस्तुनस्तत्त्वं ज्ञायते, तत्रास्य प्रवृत्तिः । अन्ये तु यत्र गुरुलघुवस्तुनोरल्पान्तरविवक्षा, तत्रास्य प्रवृत्तिरिति । साहस्री. ६७५.

**लोष्टप्रस्तारन्यायः** । लोष्टस्य मृत्तिकापिण्डस्य प्रस्तारो विस्तार इति यावत् । अयं यथा मृत्पिण्डस्य कुलालो नानावैचित्र्यं घटशरावप्रतिकृतिप्रभृतिरूपं रचयत्येवं विवक्षायां प्रवर्तते । अत एव लोष्टप्रस्तारन्यायेनानन्तवैचित्र्यमुक्तमित्युक्तं दुर्गादासेन । साहस्री. ६७४.

**लोष्टलगुडन्यायः** । यथा लोष्टस्योपमर्दको लगुडस्तथोपमर्दोपमर्दकयोः साचिव्यविवक्षायाम् अस्य प्रवृत्तिरिति । लोष्टो मृत्पिण्डः लगुडो दण्डः । साहस्री. ५०३.

**लोहाग्निन्यायः** । अयं परस्परधर्माध्यासतादात्म्याध्यासयोर्विवक्षायां प्रवर्तते । साहस्री. ३७४.

**लोहचुम्बकन्यायः** । यथा चुम्बकमणिर्निष्क्रियोऽपि संनिधिमात्रेण स्वयमप्रवर्तमानोऽपि लोहमाकृष्य प्रवर्तयति, तत्क्रियाहेतुश्च भवति, तथा पुरुषः प्रधानं प्रवर्तयतीति सांख्याः । साहस्री. १८०.

**वज्रलेपन्यायः** । अयं वस्तुनः सुदृढसुस्थिरत्वविवक्षायां प्रवर्तते । साहस्री. ७७५.

**वदतोव्याघातन्यायः** । यथा जिह्वा मे नास्ति, मम माता वन्ध्येत्यादौ प्रसरतीति सर्वदर्शनसंग्रहे बौद्धनयेऽभिहित इति । साहस्री. ६९३.

**वध्यघातकन्यायः** । यथा भुजङ्गादिभूषितां वनभूमिं दृष्ट्वा भुजङ्गादेरभावोऽवगम्यते तथा प्रकृतेऽपि । साहस्री. ३८०.

वध्यतां वध्यतां बालो नाऽनेनाऽर्थोऽस्ति जीवता। स्वपक्षहानिकर्तृत्वाद्यः कुलाङ्गारतां गतः। इति न्यायः। एवं च सत्सनातनपितृपैतामहादिचरित-सद्धर्मपरिभ्रष्टः पुत्रोऽपि वध्य एवेति भावः। साहस्री. १३३.

वनव्याघ्रन्यायः। अत्र वनव्याघ्रयोः परस्परवियुक्तयोः शबरेण प्रधर्षणी-यता भवति। संयुक्तयोस्तु परस्परसाहाय्यमाचरतोः दुर्धर्षता भवति तथा प्रकृतेऽपि। अतः रक्ष्यरक्षकभावे अयं न्यायः। साहस्री.

वरमद्य कपोतः श्वो मयूरादिति न्यायः। न्यायोऽयं संदिग्धबहुमूल्यवस्त्व-पेक्षया अल्पमूल्यवस्तुवरत्वविषये प्रवर्तते। साहस्री. ६७७.

वरघाताय कन्यावरणमिति न्यायः। न हि वरघाताय कन्यामुद्वाहयन्तीति न्यायः। द्वाविमौ समानविषयकौ समानार्थकौ स्पष्टौ हि अनिष्टान्तरपातादि-संभावनायाम् अभीष्टहेत्वपि वस्तु न वरणीयमित्येवं तात्पर्ये प्रवर्तेते। साहस्री. १५३, १५४.

वराटकान्वेषणे प्रवृत्तश्चिन्तामणिं लब्धवानिति न्यायः। यथा—काश्यां स्वर्गादिकमुद्दिश्य यागाद्यनुष्ठाता अपि अकस्मान्मरणे प्राप्ते मोक्षमेव लभते, एतादृशविषयेऽस्य प्रवृत्तिरिति। साहस्री. ७८७.

वस्तूनि मानान्यपेक्षन्ते न प्रयोजनानीति न्यायः। श्रुत्यादिमानसिद्धवस्तुनः प्रयोजनाभावापराधेन निरसनमशक्यमिति विवक्षायामस्य प्रवृत्तिरिति। साहस्री. ३६४

वह्निधूमन्यायः। यथोत्पत्तिप्रतीतिरूपद्वारभेदाद्वह्निधूमयोरितरेतरापेक्षत्वं न विहन्यते, तथा प्रकृतेऽपि। किञ्च, यथा धूमरूपकार्यदर्शनात् कारणरूप-वह्नेरनुमानम्, तथा यत्र कार्यलिङ्गेन कारणानुमानम्, तत्रास्य प्रवृत्तिरिति। साहस्री. ३१७.

वह्निन्यायः। यथा ह्येकस्याग्नेर्दाहकत्वं पाचकत्वं प्रकाशकत्वम्, तथा प्रकृतेऽपि। साहस्री. १७६.

वह्निविस्फुलिङ्गन्यायः। यथा वह्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवैतस्मादात्मनः सर्व एते आत्मानो व्युच्चरन्तीति विषयेऽस्य प्रचारः। साहस्री. ६२७.

वाक्यार्थप्रतिपत्तिन्यायः। साहस्री. ८६२.

वाक्यार्थप्रतिपत्तिन्यायेन तत्प्रतिपत्ति (संबन्धप्रतिपत्ति) संभवे तत्र शक्ति-कल्पने गौरवात्। मी०न्या०

**वालिसुग्रीवन्यायः** । यथा वालिसुग्रीवयोर्युध्यमानयोर्भगवता श्रीरामचन्द्रेण वालिनि हते वालिनः सुग्रीवापेक्षया दौर्बल्यं मन्यन्ते शूराभिमानिनः इत्येवं प्रकृतेऽप्यूह्यमिति । साहस्री. ५८५.

**विक्रीते करिणि किमङ्कुशे विवाद इति न्यायः** । अयं श्लोकाभ्यां निबद्धः । यथा—सौमित्रिर्वदति विभीषणाय लङ्कां देहि त्वं भुवनपते विनैव कोशम् । सौमित्रिं प्रति निजगाद रामचन्द्रो विक्रीते करिणि किमङ्कुशे विवादः ।। इति ।

**विधेयं स्तूयते वस्त्विति न्यायः** । अयं न्यायः तत्तद्विग्रहावच्छिन्नेशध्यानादिस्तुतये तदन्यविग्रहावच्छिन्नेशापकर्षवर्णनविषये अवतरतीति । साहस्री. ७८६.

**विवेकभ्रष्टानां भवति विनिपातः शतमुखः इति न्यायः** ।। साहस्री. ९९२

**विशेषाऽभावे विशिष्टाभाव इति न्यायः** । अयमपि न्यायः पक्षतालक्षणे संघटते । तद्यथा—यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि प्रकृतन्यायेन पक्षता भवति । तत्र विशेषीभूतायाः सिद्धेरभावाद्विशेषणस्याप्यभावः । एवमन्यत्र । साहस्री. ५४७.

**विशेषवाक्यादर्शने हि सामान्यवाक्यस्य नानाविधोऽर्थो व्याकर्तुं शक्यते इति न्यायः** । साहस्री. ५७०.

**विशेषणाभावे विशिष्टाभाव इति न्यायः** । इमं न्यायं नैयायिकाः पक्षतालक्षणे प्रकाशयन्ति । तद्यथा—'सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता' इति लक्षणे सति प्रकृतन्यायेन सिद्धौ सत्यामपि सिषाधयिषासत्त्वाऽनुमितिर्भवत्येव । तत्र सिषाधयिषाविरहात्मकविशेषणाभावात् प्रतिबन्धकीभूतायाः विशेषायाः सिद्धेरप्यभावः । साहस्री. ५४६.

**विशेष्ये विशेषणं तत्रापि च विशेषणमिति न्यायः** । यथा भूतलं जलवद्घटवत् इत्यादौ भूतले घटो विशेषणम्, स च भूतलांशे विशेषणमिति रीत्या यत्र भासते तत्रास्य प्रवृत्तिरिति । साहस्री. ५०४.

**विषं मृत्युरिति न्यायः** । मृत्योर्निमित्तमिति गम्यते । साहस्री. ९९१.

**विषयाऽऽकृष्यमाणा हि तिष्ठन्ति सुपथे कथमिति न्यायः** । साहस्री. ७३९.

**विहङ्गमन्यायः** । यथा पिपीलिकाप्लवङ्गमापेक्षया विहङ्गमोऽनायासेन उच्चतममपि मधुरं फलरसम् आस्वदते, तथैव उत्तमाधिकारी ज्ञानी मध्यमाधिकार्यपेक्षया अनायासेन जन्मान्तरीयसंस्कारैः शुद्धान्तःकरणतया लब्धपूर्णज्ञानोऽचिरादेव चिदानन्दरूपतां प्राप्नोति इति । साहस्री. ५१७.

**वीचितरङ्गन्यायः** । तद्यथा—यद्यपि वीचितरङ्गशब्दौ पर्यायौ, 'भङ्गस्त-रङ्ग ऊर्मिर्वा स्त्रियां वीचिः' इति कोशात् तथाप्युपचारः एवमेव जीवब्रह्मणो-रभेदेऽपि भेदोपचारः ।

**वृकबन्धनन्यायः** । यथा वृकं जिघृक्षुः कश्चित् सूर्यरश्मिसंतप्तशिरस्के वृके नवनीतं निधाय तेन विलेपनेन तन्नेत्रयोः पूर्णयोरन्धीभूतं तं जिघृक्षति । तस्य यथा नवनीतप्रक्षेपणायासो वृथा, तं विनाऽपि तदैव ग्रहीतुं शक्यत्वात्, तथा प्रकृतेऽपि । साहस्री. २५१.

**वृक्षमूलनिषिञ्चनन्यायः** । यथा तरोर्मूलनिषिञ्चनेन तृप्यन्ति तत्स्कन्ध-भुजोऽपि शाखाः । प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या ॥ इत्यनेनायं व्याख्यातः । साहस्री. ५३.

**वृक्षवृत्तिन्यायः** । अयं विनोद्यमं स्वतःसिद्धवस्तुप्राप्तिजीवनविवक्षायां प्रवर्तते । यथा वृक्षो मेघोदकेन चन्द्रकिरणैश्च जीवतीति प्रसिद्धम् । तथाऽऽह कालिदासः—'वृक्षवृत्तिव्यतिरिक्तसाधनः' इत्येतेन । साहस्री. ६५६.

**वृद्धकुमारीवरन्यायः** । अयं महाभाष्ये 'न मु ने' (पा० ८।२।३) इति सूत्रव्याख्यानावसरे व्याख्यातः ।

**वृद्धब्राह्मणवरन्यायः** । यथा—आसीत् कश्चित् जन्मान्धोऽत्यन्तदरिद्रोऽजात-विवाहो वृद्धो ब्राह्मणः । स च नानाविधैर्दुःखैर्बलवत्पीडितस्तीव्रतपश्चरणेन परमेश्वरमाराधयामास । तस्य तपसा प्रीतः परमेश्वरः स्वाभीष्टमेकं वरं याच-स्वेति तं प्रेरयामास ।

**वृद्धिमिष्टवतो मूलं विनष्टमिति न्यायः** । अयमपि पूर्वविषये (एकं संधित्सतोऽपरं प्रच्यवते') प्रवर्तते । सर्वेषामीशत्वाङ्गीकारेऽपि तस्याऽसंगत्वेन घटादिवद्विनाशोत्पत्तिः, ब्रह्मादीशत्वबोधकानां वाक्यानां व्यवस्थाऽभावादप्रामा-ण्यापत्तिरिति । साहस्री. ८६.

**वृश्चिकीगर्भन्यायः** । (यथा वृश्चिकीगर्भः वृश्चिकीं नाशयति तथा अज्ञान-कार्यान्तःकरणवृत्त्यात्मकं ज्ञानमपि अज्ञानं नाशयति ।) । साहस्री. ३१७.

**वैकल्पिकन्यायः** । परिगृहीतद्रव्यापचारे वैकल्पिकद्रव्यान्तरस्य न प्रतिनिधि-त्वम् । वैकल्पिकद्रव्यस्य प्रतिनिधित्वं न ।

**व्यपगतलेपालाबून्यायः** । यथा मृत्तिकालेपकृतमलाबूद्रव्यं जलेऽधः पतति, पुनरपेतमृत्तिकाबन्धमूर्ध्वं गच्छतीत्यार्हताः । साहस्री. ७०४.

**व्यपदेशिन्यायः** । एकस्मिन्नुभयारोपो व्यपदेशः । यथा—देवदत्तस्यैक एव

पुत्रः स एव ज्येष्ठः स एव कनिष्ठः । किञ्च निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारो व्यपदेशः, सोऽस्यास्ति तेन तुल्यमित्यर्थः । साहस्री. ३२.

**व्याकरणाधिकरणम्** । व्याकरणसिद्धाः साधवः शब्दाः कर्मसु प्रयोज्याः ।

**व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति न्यायः** । अस्यार्थः— विशेषस्य अन्यतराद्यर्थरूपस्य व्याख्यानाच्छिष्टकृतात् प्रतिपत्तिर्निश्चयः, हि यतः संदेहात् शास्त्रम् अलक्षणम् अननुष्ठापकं लक्षणमलक्षणं तथा न, शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः ।

**व्याघ्रचोरधनुर्न्यायः** । अयं नम्रीभूय स्वकार्यसाधनकर्मणि प्रवर्तते । यथा व्याघ्रचोरधनूंषि नम्रीभूय स्वकार्यं साधयन्ति, तथा नीचजनस्य प्रकृतिर्भवतीति । साहस्री. ८०९.

**व्याघ्रीक्षीरन्यायः** । यथा सुवर्णपात्रे एव व्याघ्रीक्षीरं तिष्ठति फलाय च भवति, तथा सद्गुरूपदेशो हि शमादिसाधनसम्पन्ने सच्छिष्ये एव प्रतिष्ठां लभते । साहस्री. ३२०.

**व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिरिति न्यायः** । अन्यूनदेशकालवृत्तित्वं व्यापकत्वम् अपरिच्छिन्नत्वम् असीमत्वमिति यावत् । अनधिदेशकालनियमं व्याप्यमिति, व्याप्तुं योग्यमित्यर्थः ।

**व्रीहिबीजन्यायः** । यथा व्रीहिबीजस्य स्थूलस्तुषः स्पष्टः, तत आन्तरः सूक्ष्मस्तुषः फलीकरणनामा, ततोऽप्यान्तरो गर्भभूतस्तण्डुलः ।

**शङ्काभिः सर्वमाक्रान्तमिति न्यायः** । स्फुटः । सर्वत्र निश्चयाभावविवक्षायामस्य प्रवृत्तिः । साहस्री. ६१२.

**शङ्कूत्खातदंष्ट्रोरगन्यायः** । यथा उत्पाटितदन्तपङ्क्तिर्नागो नापकारक्षमो भवति, तथा नाशितस्वसहायकशत्रुरपि न हि शक्नोत्यपकर्तुमिति । साहस्री. २८९.

**शङ्खवेलान्यायः** । यथा वेलाविशेषे शंखध्वनिविशेषो यत्र नियमितस्तत्र शंखध्वनिना वेलाविशेषज्ञानं जायते, तथा यत्र विवक्षा तत्रास्य प्रवृत्तिः । साहस्री. ५०५.

**शते पञ्चाशदिति न्यायः** । यथा व्यापकशतसंख्यायां व्याप्यपञ्चाशत्संख्या निविष्टा, एवं यत्र व्यापके व्याप्यस्य निवेशस्तत्रास्य प्रवृत्तिः । साहस्री. ४८१.

**शतपत्रभेदन्यायः** । यथा—सूच्या शतपत्रपत्रभेदने कालयौगपद्यप्रतीतेर्भ्रमः, तथाहि—प्रथमक्षणे सूचीक्रियया तस्याः पत्रेण संयोगः, द्वितीये पत्रावयवयोः,

तृतीये तयोर्विभागः, तुरीये आरम्भसंयोगनाशः, पञ्चमे पत्रनाशः इति प्रतिपत्रभेदने बहुक्षणविलम्बस्य युक्तिसिद्धत्वात्, तथा दीर्घशष्कुल्यादिभक्षणादौ रासनादिज्ञानानां यौगपद्यप्रतीतेर्भ्रम इति। एवं क्रमेण जायमानायां क्रियायां यौगपद्यभ्रमो यत्र विवक्ष्यते, तत्रास्य प्रवृत्तिरिति। साहस्री. ४६०.

**शल्यकवानाखुन्यायः**। अयं शान्तिपर्वणि अ० ८२ श्लो० ६ टीकायाम्। 'यथा शल्यकवानाखुः पदं धूनयते सदा। अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत्॥' इति।

**शवोद्वर्तनन्यायः**। यत्र क्रिया निष्फला, तत्र अस्य न्यायस्य प्रवृत्तिः। साहस्री. २६६.

**शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते। प्रमदा पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि॥ इति न्यायः**। साहस्री. ६५३.

**शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यत इति न्यायः**। साहस्री. २३७

**शिरश्छेदेऽपि शतं न ददाति विंशतिपञ्चकं तु प्रयच्छति शाकटिक इति न्यायः**। अयं न्यायः सर्वदर्शनसंग्रहे पूर्णप्रज्ञमते अभिहितः। तथाहि—ननु प्रपञ्चस्य मिथ्यात्वमभ्युपेयते, नासत्त्वमिति चेत् तदेतत्सोऽयं शिरश्छेदेऽपि शतं न ददाति विंशतिपञ्चकं प्रयच्छतीति शाकटिकवृत्तान्तमनुहरेत् मिथ्यात्वासत्त्वयोः पर्यायत्वात् इत्यलमतिप्रसङ्गेन। शाकटिकः शकटेन गमनकर्ता इति यावत्। साहस्री. ६८१.

**शिरोवेष्टनेन नासिकास्पर्शनन्यायः**। ऋजुना मार्गेण सिध्यतोऽर्थस्य वक्रेण साधनं व्यर्थम्। के.

**शीतकिरणकरावलम्बनन्यायः**। अयं स्वशक्तिबहिर्भूतवस्तुग्रहणार्थसाहसकरणेऽवतरतीति स्पष्टः शङ्करजये। साहस्री. ८८६.

**शीतलाप्रस्तरन्यायः**। यथा शीतलाप्रस्तरः पूज्यते तोल्यतेऽपि जनैः एवंविधविषयविवक्षायां प्रवर्ततेऽयमिति। साहस्री. ६३०.

**शीर्षे सर्पो देशान्तरे वैद्य इति न्यायः**। उक्तं च-'उपरि घनं घनरटितं दूरे दयिता किमेतदापतितम्। हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः॥' इति। साहस्री. ६८२.

**शीलं हि विदुषां धनमिति न्यायः**। साहस्री. ६४६.

**शुकनलिकान्यायः**। अयं महाभारते उद्योगपर्वणि ६६ अ. 'काकुदीकं

शुकं नाकमक्षिसंतर्जनं तथा । संतानं नर्तकं घोरमास्यमोदकमष्टमम् ॥' इति ४२ श्लोकटीकायामभिहितः ।

**शुद्धोदलवणन्यायः** । उक्तं च महोपनिषदि— यथा पक्षी च सूत्रं च नानावृक्षरसा यथा । यथा नद्यः समुद्राश्च शुद्धोदलवणे यथा ॥

**शूकरवाटिकान्यायः** । यथा शूकरः पुष्पितां पुष्पवाटिकां प्रविश्य तत्रत्यविचित्राणि सुरभीणि तरुफलपुष्पाणि परित्यज्य विष्ठामेव चिनुते, तथैव खलः सतां गुणसमुदायमुपेक्ष्य केवलच्छिद्रमन्वेषयतीति संक्षेपः । साहस्री. ५१८.

**शृङ्गग्राहिकान्यायः** । शृङ्गस्य ग्रहणं यस्यां क्रियायां सा शृङ्गग्राहिका । यत्रैकाङ्गलक्षणेनैवाङ्गी लक्ष्यते, तत्रायं प्रवर्तते ।

**शूरा हि प्रणतिप्रिया इति न्यायः** । स्पष्टः । साहस्री. ६८२

**शैलूषीन्यायः** । यथा शैलूषी नटी क्रमेण विविधरूपाणि धत्ते, तथा अर्थालंकारेषु एकोपमैव नानाप्रतीपाद्यलंकाररूपाणि धत्ते । उक्तं च—उपमैका शैलूषी संप्राप्ता चित्रभूमिकाभेदान् । प्रीणयति काव्यरङ्गे नर्तयति तद्विदां चेतः ॥ इति । साहस्री. ३६९.

**श्मशानवैराग्यन्यायः** । अयमपि महाभारते अश्व० प० अ० १ श्लो० १३ टीकायामुक्तः । तत्रेत्थम्—द्वितीये 'यो माम्' इति श्लोके प्रहरणे मनसि श्मशानवैराग्यन्यायेन जितो मया काम इति निश्चित्य प्रयतते संन्यासादिकं करोति, तस्य मनस्येव पुनरहं प्रादुर्भवामि ।

**श्यामरक्तन्यायः** । यथा घटपटादौ श्यामगुणनाशे रक्तगुणोत्पत्तिरेवं यत्र पूर्वगुणनाशेऽपरगुणसमावेशस्तत्रास्य प्रवृत्तिरिति । साहस्री. ५०६.

**श्यालशुनकन्यायः** । यथेत्थं लौकिकी गाथा-कश्चित्कुतर्की स्वसद्मस्थे शुनि श्यालनामकं संकेतं कृत्वा स्वस्त्रीकोपोत्पादनाय तं गालीर्ददौ, सा च तं भ्रातरं मत्वाऽतिकोपपरीतात्मतयाऽतिदुःखिता बभूव ।

**श्येनकपोतीयन्यायः** । यथा कपोतोऽतर्कितागतेन श्येनेन गृहीतस्तथा काकतालीयवत् ज्ञेयमिति । साहस्री. ६८८.

**श्रियं हि सततोत्साही दुर्बलोऽपि समश्नुते इति** भारविः । साहस्री. ६६६.

**श्रुतानुमितयोः श्रुतसंबन्धो बलीयानिति न्यायः** । श्रुतेनैव संबन्धो नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः, प्रकरणादितः श्रुतेः बलवत्त्वादिति भावः । साहस्री. ५४५.

**श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थवि-**

ऽकर्षात् । श्रुतिः लिङ्गं वाक्यं प्रकरणं स्थानं समाख्या चेति षण्णां विनियोगबोधकानां प्रमाणानां समवाये एकविषये विरोधे सति पारदौर्बल्यं ज्ञेयम् । दुर्बलस्य भावो दौर्बल्यं परस्य परस्य दुर्बलत्वं पूर्वस्य पूर्वस्य प्रबलत्वम् इति ज्ञेयम् । अर्थविप्रकर्षात् ।

**श्रेयांसि बहुविघ्नानि भवन्ति महतामपि** इति न्यायः । यत्र शुभे कर्मणि विघ्नबाहुल्यं भवेत् तत्रायमवतरतीति । साहस्री. ५३४.

**श्वः कर्तव्यमद्यैव कुर्विति न्यायः** । 'श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चाऽऽपराह्णिकम् । न हि मृत्युः प्रतीक्षेत कृतं वाऽप्यथ वाऽकृतम् ॥' इति साहस्री. ३४५.

**श्वपिशुनन्यायः** । यथा श्वा तथा पिशुनः, यथा पिशुनस्तथा श्वेति विषयविवक्षायामवतरति ।

**श्वपुच्छोन्नामनन्यायः** । स्पष्टार्थः । यत्र क्रिया निष्फला तत्रास्य प्रवृत्तिः साहस्री. ३०३.

**श्वशुष्कास्थिन्यायः** । लौकिकगाथारूपोऽयम् । यथा श्वा कुक्कुरः शुष्कं नीरसमस्थि मुखे धृत्वा चर्वति ।

**श्वश्रूनिर्गच्छोक्तिन्यायः** । यत्र परकृतनिषेधं निराकृत्य स्वयं निषेधति, तत्र अयं प्रवर्तते ।

**षट्कर्णो भिद्यते मन्त्रः इति न्यायः** । मन्त्रः मन्त्रणाकार्यम् । षट्संख्याकाः कर्णा यस्मिन् तथाभूतः, तृतीयपुरुषश्रुत इत्यर्थः । भिद्यते प्रकाशं यातीति स्पष्टः । साहस्री. ६५४.

**संवादिभ्रमन्यायः** । यथा कश्चित् मणिप्रभां मणिबुद्ध्या पश्यन् भ्रान्त एव, तथापि तद्ग्रहणकाले मणिं लभतेऽतः स संवादिभ्रमः, एवं त्वंपदार्थं तत्पदार्थमणिप्रभाभूतं तत्पदार्थबुद्ध्या भावयन् व्यवहारतो भ्रान्त एव तथापि तत्साक्षात्कारकाले तदनन्यस्य तत्पदार्थस्य साक्षात्कारोऽपि संवादिभ्रमन्यायेन जायते इति नीलकण्ठः । संवादिनी सदृशीत्यर्थः । तस्या भ्रमः संवादिभ्रम इत्यर्थः । साहस्री. ६२१.

**सकृदुच्चरितः शब्दः सकृदेवार्थमवगमयतीति न्यायः** । साहस्री. ५७.

**सद्भावार्द्रः फलति न चिरेणोपकारो महत्स्विति न्यायः** । अस्यार्थः महत्सु गुणगरिष्ठेषु विषये योऽसौ उपकारः स चिरेण दूरेण न फलति, किन्तु तत्कालमेव फलति । कथम्भूत उपकारः—सद्भावार्द्रः सम्यक्स्नेहरससहितः इति अन्वयः, इति कालिदासः । साहस्री. ६७५.

**संनियोगशिष्टानामन्यतरापाये उभयोरप्यपाय इति न्यायः।** तद्यथा—देवदत्तयज्ञदत्ताभ्यामिदं कार्यं कर्तव्यमित्यादेशे देवदत्तापाये यज्ञदत्तोऽपि न करोति तथा प्रकृतेऽपि। अयम् 'पूतक्रतोरै च' (पा० ४।१।३६) इति सूत्र-महाभाष्ये अभिहितः। साहस्री. ४४४.

**संनिहिते बुद्धिरन्तरङ्गमिति न्यायः।** संनिकृष्टविप्रकृष्टयोरुभयोः यत्रान्वयसंभावना तत्र संनिहितस्यैवासत्तिबलादन्वयो न विप्रकृष्टस्येत्येवं विवक्षायामस्य प्रवृत्तिरिति। साहस्री. ५०९.

**समागमाः सापगमाः इति न्यायः।** सर्वमुत्पादि भङ्गुरमिति विषये अस्य प्रचार इति। साहस्री. ८०६.

**समीपलक्षकशब्दमङ्गीकृत्य तदर्थः क्रियते इति न्यायः।** अयं ज्योतिःशास्त्रे व्यवहृतः। साहस्री. ५६९.

**समुद्रवृष्टिन्यायः।** वैपर्ययबोधकोऽयं न्यायः। यत्र क्रिया निष्फला तत्रैवास्य प्रवृत्तिरिति। साहस्री. २९६.

**समूहालम्बनन्यायः।** यत्र उपस्थितपदार्थानां विशेषणविशेष्यभावेनान्वयासंभवस्तत्र उपस्थितपदार्थानां समूहमालम्ब्यैव बोधः। यथा—घटः पटश्चेत्यादौ घटपटयोरुभयोरेव विशेष्यता, समूहालम्बनबोधे च विशेष्यताद्वयम्, संशये त्वेका विशेष्यतेति भेदः। साहस्री. ५१०.

**संबन्धिशब्दैर्वा तुल्यमेतदिति न्यायः।** तद्यथा—संबन्धिशब्दाः मातरि वर्तितव्यं, पितरि वर्तितव्यं, शुश्रूषितव्यमिति। न चोच्यते स्वस्यां मातरि स्वस्मिन्पितरीति। सम्बन्धाद्गम्यते—या यस्य माता, यो यस्य पितेति 'आदिरन्त्येन सहेता' १।१।७१ इति सूत्रमहाभाष्ये स्पष्टम्। साहस्री. ६००.

**संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदिति न्यायः।** यथा नीलो घटः नीले घटे संभवति, पीतादिघटे व्यभिचरत्यतो घटस्य नीलता नीले घटे संभवति, पीतादिघटे व्यभिचरत्यतो घटस्य नील इति विशेषणमर्थवदिति तथा अन्यत्रापि बोध्यम्। साहस्री. १८६.

**सर्वं कार्यं सकारणमिति न्यायः।** कार्यं प्रागभावप्रतियोगि, कार्यनियतपूर्ववृत्तिकारणमिति सर्वं कार्यजातं घटादिज्ञानं सकारणं मृदादिज्ञानपूर्वकं भवति। उक्तं च—'कारणज्ञानतः कार्यविज्ञानं चापि सोऽवदत्' इति। उक्तं च—'जगतां यदि नो कर्ता कुलालेन विना घटः। चित्रकारं विना चित्रं स्वत एव भवेदिति ॥' साहस्री. ३७.

**सर्वं खलस्य चरितं मशकः करोतीति न्यायः।** स्पष्टार्थः। उक्तं च— 'प्राक्पादयोः पतति खादति पृष्ठमासं कर्णे कलं किमपि रौति शनैर्विचित्रम्। छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः सर्वं खलस्य चरितं मशकः करोति इति। साहस्री. ६४६.

**सर्वं पदं हस्तिपदे निमग्नमिति न्यायः।** यत्र महति लघ्वारोपस्तत्रायं प्रवर्तते इति। साहस्री. ५१६.

**सर्वं वाक्यं साऽवधारणमिति न्यायः।** यथाऽवधारणार्थक एवकारस्त्रिविधः —(१) क्रियान्वितः, (२) विशेषणान्वितः, (३) विशेष्यान्वितश्च।

**सर्वं विशेषणं सावधारणमिति न्यायः।** यथा शङ्खः श्वेत एवेत्यर्थः, एवमन्यत्रापि बोध्यमिति। साहस्री. ६५.

**सर्वे इमे स्वभूत्यर्थं प्रवर्त्तन्ते इति न्यायः॥ सर्वः स्वार्थं समीहते इति न्यायः। ननु स्वार्थपरो लोक इति न्यायः॥** इमे त्रयः समानाभिप्रायकाः। 'हेतुमति च' ३।१।२६ इति सूत्रमहाभाष्योक्तः।

**सर्वे वेदा यत्पदमामनन्तीति न्यायः।** यथा—सर्वस्यापि शास्त्रस्य महत्तात्पर्यं निर्विशेषे एव ब्रह्मणीति पर्यवसितमिति। साहस्री. ५२४.

**सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः। अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः इति न्यायः।** यथा—मूढाः शिष्टाचारमंशे विगीतं दृष्ट्वा कृत्स्नमपि त्यजन्ति, स्वभाववादं चानुरुध्यन्ते। बुधास्तु श्रुत्यन्तरविरुद्धांशमात्रं त्यक्त्वा तेनैव सदाचारेण मुच्यन्ते इति। साहस्री. २४१.

**सर्ववेदान्तप्रत्यय इति न्यायः।** यथा सर्वेभ्यो वेदान्तेभ्यः एकमेव परं ब्रह्म प्रतीयते एतदभिप्रायकप्रसङ्गेऽयं प्रवर्तते इति। साहस्री. ७८८.

**सर्वस्वदानन्यायः।** विश्वजिति सर्वस्वदाने पित्रादयो न देया॥

**साकमेधीयन्यायः।** चातुर्मास्येषु साकमेधीयानामनीकवत्यादीनां सद्यस्कालता।

**साक्षात् प्रकृतौ विकारलय इति न्यायः।** यथा घटादेर्लयो हि कपालादावेव न तु परमाणुषु तथैवानुभवादिति तदर्थः। एवं हि विकारस्य स्वप्रकृतिलयो यत्र विवक्ष्यते तत्रास्य न्यायस्य प्रवृत्तिरिति। अयमपि शास्त्रीयो न लौकिकः। साहस्री. ४६.

**साधनाऽनुष्ठानतन्त्रा हि साध्यसंसिद्धिरिति न्यायः।** यथा, साधनानि चत्वारि—१ नित्यानित्यवस्तुविवेकः, २ इहामुत्रार्थफलभोगविरागः, ३ शम-

दमादिषट्सम्पत्तिः, मुमुक्षुत्वं च । एतत्साधनानुष्ठानतन्त्रा हि यथा साध्यस्यात्मज्ञानस्य संसिद्धिर्भवति, तथा प्रकृतान्तरेऽपीति बोध्यम् । साहस्री. ४२२.

**साधुमैत्रीन्यायः** । आदौ लघुः पश्चान्महती ।

**सापेक्षमसमर्थवदिति न्यायः** । व्याकरणशास्त्रविषयकोऽयं न्यायः । साहस्री. ६८७.

**सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः । लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः ॥ इति न्यायः** । अयं 'वाक्यादेरामन्त्रितस्याऽसूयासंमतिकोपकुत्सनभर्त्सनेषु' (पा० ८।१८) इति सूत्रभाष्ये प्रोक्तः ।

**सार्वजनीनस्तुल्याऽऽयव्ययः इति न्यायः** । साहस्री. ८८.

**सावकाशनिरवकाशयोर्निरवकाशो बलीयानिति न्यायः** । संभवद्विषयान्तरः सावकाशः, अतथाभूतो निरवकाशः । तेन निरवकाशेन सावकाशो विधिर्बाध्यते ।

**सिंहावलोकनन्यायः** । यथा सिंहः कञ्चिन्मृगं हत्वा अग्रे गच्छन्नन्योऽपि चेत्स्यात्तमपि हन्यामिति धिया पश्चात्पश्यति हन्ति दृष्टिपथमागतम्, तथा बुद्धिपथागतस्वपक्षपरिपन्थिपरिकल्पितयुक्त्याभासान्तरनिरासायाप्युत्तरग्रन्थप्रवृत्तिरित्यर्थः । साहस्री. १३.

**सिंहमृगन्यायः** । शाश्वतिके विरोधेऽयम् । साहस्री. ४००.

**सिंहमेषन्यायः** । यथा सिंहशावकोऽपि कथञ्चित् ग्रामीणवशं प्राप्तो मेषैः सह चरन् युवाऽपि सन् विविधरूपकृतलम्बकर्णत्वशृङ्गित्वाशृङ्गित्वादिकृतं विशेषं पश्यन् आत्मानमपि मेषविशेषं मेने, दूर्वादिकं च बुभुजे, तथा प्रकृतेऽपि । साहस्री. ३५८.

**सिंहीक्षीरन्यायः** । यथा सुवर्णपात्रे एव सिंहीक्षीरं तिष्ठति, फलाय च भवति, तथा सद्गुरूपदेशो हि शमादिसाधनसंपन्ने सच्छिष्ये एव प्रतिष्ठां लभते । साहस्री. ३१९.

**सुतजनिमृतिन्यायः** । कश्चित् एकं देवमाराध्य एकं पुत्रं लब्धवान् । पुनश्च अपरं देवमाराध्य द्वितीयं पुत्रं लब्धवान् । परं प्रथमदेवकोपात् प्रथमः पुत्रो मृतः इति । न्यासः ।

**सुतजन्ममृतिन्यायः** । यथा कश्चित् कञ्चिद्देवमाराध्य ततः पुत्रं लब्धवान् । तज्जन्मक्षणे एव पूर्वदेवकोपात् पूर्वजातमरणं जातम् । साहस्री. ८४.

**संस्कारः** । संस्कारः अदृष्टोऽयस्ति इत्यवगम्यते लोके, यथा—ग्रामान्तरादागतानां पुरुषाणां पर्यग्निकरणेन अदृष्ट उपकारः क्रियते इत्युच्यते । लोके च

नानुपपत्तिः । २।१।४.१२. संस्कारः अदृष्टोपकारजनकोऽपि संभवति (यथा ग्रामान्तरादागतानाम् अग्निलवणादिना परिष्करणम् । 'दृष्ट काढणे इति भाषायां प्रसिद्धम्') । सु. पृ० ६३३. संस्कारः । अनुभूते एव वस्तुनि स्मरणं भवति नाननुभूते । तत्र यदि अनुभवः कञ्चिदतिशयम् आत्मनि नादध्यात् तदा अनुभूताननुभूतयोः अविशेषात् उभयत्रापि स्मृतिः स्यात् । न चोभयत्रापि । अतश्चेयं व्यवस्थया स्मृतिः उपजायमाना अनुभवहितसंस्कारं प्रकल्पयति । सोऽपि यदि अनुभववत् क्षणिकः स्यात् कालान्तरे स्मृतिर्नोपपद्यते । तस्मात् कालान्तरावस्थायी संस्कारोऽस्ति इति गम्यते । ऋजु० पृ०११४. संस्कारोऽपि शेषः । संस्कारो नाम स भवति, यस्मिन् जाते पदार्थो योग्यो भवति कस्यचिदर्थस्य । तेनापि क्रियायां कर्तव्यायां प्रयोजनम् इति सोऽपि परार्थः ।

संस्काराः द्रव्यस्य अङ्गप्रधानार्थाः । योग्यताम् आदधानाः क्रियाः संस्कारा इत्युच्यन्ते । ३।७।२.६. संस्कारस्य चैष स्वभावः यदुपयुक्तमुपयोक्ष्यमाणं वा द्रव्यमवलम्बते ।

संस्कारहेतुः क्रिया न द्रव्यम्, तत्र व्यञ्जकं स्यात् । वि० ५।३।११.

सुन्दोपसुन्दन्यायः । अन्योन्यनाश्यनाशकभावविवक्षायामयं न्यायो हि प्रवर्तते ।

सुपेटिकास्थापनन्यायः । यथा समीचीनां पेटिकां दृष्ट्वा स्वस्योत्कृष्टं वस्तु सर्वे स्थापयन्ति, तथा भगवतः कीर्तिं श्रुत्वा स्वबुद्धिरत्नं भगवति स्थापयन्तीति श्रीवल्लभचरणैः प्रथमस्कन्धसुबोधिन्यां ध्वनित इति । साहस्री. ६१३.

सुप्तडिम्भमुखचुम्बनन्यायः । सुप्तस्य डिम्भस्य बालस्य मुखस्य चुम्बनं यद्वत् इति अक्षरार्थः । यत्र क्रिया निष्फला तत्र अस्य प्रवृत्तिः । साहस्री. ३११.

सुभगाबालोदिताख्यायिकान्यायः । सुभगा बालयोदिता आख्यायिका । कथेत्यर्थः ।

सुवर्णन्यायः । यथा सुवर्णं निघर्षणच्छेदनतापनादिकर्मभिरुत्कृष्टतां प्राप्नोति, तथा पठितशास्त्रमपि घोषणपरिप्रश्नविचारणादिभिरुत्कृष्टतां लभते, एवं प्रकृतान्तरेऽपि । साहस्री. ८९२.

सूचीकटाहन्यायः । यथा लोहकारं प्रति पूर्वं कश्चित्कटाहोत्पादनार्थी ह्यागतः, पश्चात्सूच्युत्पादनार्थी प्राप्तः, तत्र लोहकारः प्रथमं कर्तव्यत्वेन प्राप्तमपि कटाहं बहुकालसाध्यत्वात्परित्यज्य पश्चात्कर्तव्यतया प्राप्तामपि स्वल्पकालसाध्यां सूचीं प्रथममुत्पादयति, तथा अनेकेषु पदेषु वाक्येषु व्याख्येयेषु प्रथमपठितमपि बृहद्वाक्यं परित्यज्य मध्ये चान्ते वा पठितं स्वल्पं वक्तव्यं व्याख्यायते, इत्येवं प्रकृतान्तरेऽपि बोध्यम् । साहस्री. १९८.

**सूचीमुखीन्यायः**। अस्य गाथा यथा-कस्मिंश्चिद्वने शमीवृक्षशाखायाम-रण्यचटकदम्पती वसतः स्म। तत्र कदाचिद्धेमन्ते मेघे वर्षत्येकः शाखामृगः शीतवातवेपमानः शमीमूल उपविष्टः। अथ तं तादृशमवलोक्य चटका प्राह—'भो भद्र हस्तपातसमोपेतपुरुषाकृतिस्त्वं मूढ शीतेन कथं पीडयसे, गृहं कथं न कुरुषे'। एतच्छ्रुत्वा तां वानरः सकोपमाह—'सूचीमुखी दुराचारा रण्डा पण्डित-वादिनी। नाशङ्कते प्रजल्पन्ती तत्किमेनां न हन्म्यहम् ॥' एवं प्रलप्य तां शमी-मारुह्य तस्यं कुलायः शतधा खण्डशः कृतवान् इति। अयं न्यायः मूर्खोपदेश-करणविषये प्रवर्तते। अत्र सूचीव मुखं यस्याः सा इत्यर्थः। ८०३.

**सूचीसूत्रविचारन्यायः**। सूच्यां सूत्रस्य विचारः प्रवेशः, तादृशी रीतिः इत्यर्थः। 'यादृक् चित्रप्रतीतिः स्यात् तादृक् कर्मफलं नृणाम्। परलोकगति-स्तादृक् सूचीसूत्रविचारवत् ॥' गरुडपुराणे प्रेतखण्डे अध्यायः ३८, श्लोक १५.

**सूत्रशाटकन्यायः**। अयं हि 'इग्यणः संप्रसारणम्' (पा० १।१।४५) इति सूत्रस्थमहाभाष्ये अभिहितः।

**स्तनन्धयन्यायः**। यथा स्तनन्धयः शिशुः आगलं स्तनं पाययित्वा मृद्वादि-गुणयोगिनि तल्पे शायितः स्वकीयादिज्ञानशून्यत्वेन रागादिरहितः सन् सुखमूर्ति-रेवावतिष्ठते, तथा ब्रह्मानन्दैकतत्परः पुरुषो ब्रह्मानन्दैकभाग्भवतीति। साहस्री. ३३६.

**स्थालीपुलाकन्यायः**। यथा प्रज्वलितचुल्ल्यधिरोहितस्थाल्यन्तर्गतेष्वेकस्मिन् पक्वे निश्चिते सर्वे पुलाका निश्चीयन्ते, तद्वत्प्रकृतेऽपि। यथा वा पाचकः स्थालीपुलाकस्यैकस्य पक्वताज्ञानेन सर्वस्याप्यन्यस्य पक्वतां विजानाति, तथा ब्रह्मविद्यतिः स्वमुक्त्या सर्वान् मुक्तानेव विजानाति, न तु स्वमात्रमिति शङ्क-रानन्दस्वामी। साहस्री. १९७.

**स्थावरजङ्गमविषन्यायः**। यथा रजतादिज्ञानतद्बाधज्ञानयोः सर्पवत्सना-भादिरूपजङ्गमस्थावरविषयोश्चेतरेण पूर्वबाधः प्रसिद्धः, तथा प्रकृतेऽपि। साहस्री. २२६.

**स्थूणानिखननन्यायः**। 'स्थूणा स्तम्भेऽपि वेश्मनः' इत्यमरः। अपिशब्दा-ल्लोहप्रतिमायामपि। स्थूणा यथाऽसकृत्संचाल्य निखनने क्रियमाणे दृढा भवति तथोत्तरग्रन्थेन प्रागुपपादितार्थदार्ढ्यं भवतीत्यर्थः। साहस्री. १२.

**स्थूलात्सूक्ष्मं ज्यायः इति न्यायः**। यदा तु महापातस्य स्थितिरूपसूक्ष्म-कालज्ञानं स्यात्तदा स्थूलात्सूक्ष्मं ज्यायः इति न्यायेन स एव पातमध्यकालो विवाहादिमङ्गलकृत्येषु त्याज्यः, अन्यथा गणितग्रन्थेषु पातस्थितिकाला-

नयनवैयर्थ्यप्रसङ्गः इति निष्कृष्टोऽर्थ इत्युक्तः । साहस्री. ५६०.

**स्थूलारुन्धतीन्यायः** । स्थूलारुन्धतीनिदर्शनन्यायः । अविद्योपाधिकजीवस्य अहंकारत्वोक्तिः स्थूलारुन्धतीन्यायेन । अद्वैत. पृ. ५९८.

**स्नेहदीपन्यायः** । स्नेहाऽभावे जाते दीपनिवृत्तिः । साहस्री. ३७७.

**स्फटिकलौहित्यन्यायः** । यथा स्फटिके जपापुष्पादिसन्निधिकृतलौहित्यस्य तन्निवृत्तौ निवृत्तिः, तथाऽऽत्मेत्युपाधितन्त्रस्य जीवस्य तद्बाधात्तद्बाध इति । साहस्री. ३५१.

**स्फुलिङ्गन्यायः** । मन्थनानन्तरं जातस्याग्नेः अभिमन्त्रणात् पूर्वमनुगमने स्फुलिङ्गन्यायेन तमनादृत्य पुनर्मन्थनम् ।

**स्वाङ्गं स्वव्यवधायकं न भवतीति न्यायः** । स्फुटः । ३६०.

**स्वाङ्गुष्ठमपि चुम्बन्तमिक्षुदण्डमयाचत इति न्यायः** । यत्र श्रौतस्मार्तसनातनधर्मानभिज्ञवर्णाश्रमभ्रष्टा मूर्खा जनाः स्वस्वप्रीतिगोचरेभ्यः स्वाभिलषितार्थतृष्णाग्रस्तेभ्यः आचार्याभासेभ्यो निजाभीष्टानर्थान् याचन्ते तत्रायं चरितार्थ इति । साहस्री. ८०

**स्वकरकुचन्यायः** । यथा स्वकरेण स्वकुचयोर्मर्दनं कुर्वती युवती न सुखं लभते, तथा जिज्ञासुरपि न स्वतन्त्रविचारेण ज्ञानमाप्नोति, किन्तु आचार्यद्वारा तत्त्वज्ञानं प्राप्नोति, आचार्यवान् पुरुषो वेद इति श्रुतेरिति । साहस्री. ३४६.

**स्वजातिर्दुरतिक्रमेति न्यायः** । 'स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता' इति न्यायः । अयं श्रीहर्षोक्तिरूपः । अस्यार्थः हि यतो यस्मात् सतां साधूनां परार्थता परोपकारित्वं स्वत एव स्वभावत एव भवतीति शेषः । यथा ग्रहणानां ज्ञानानां स्वतः यथार्थता प्रामाण्यम् । ज्ञानानां स्वतः प्रामाण्यं न तु परत इति मीमांसकाः ।

**स्वप्रकाशाश्रयन्यायः** । यथा रवेस्तदाश्रितप्रभारूपद्रव्यस्य च सत्यपि भेदे तेजस्त्वरूपसाजात्येनाऽभेदस्तथा प्रकृतेऽपि । साहस्री. १५८.

**स्वशिश्नमपि चुम्बन्तमिक्षुदण्डमयाचत इति न्यायः** । तादृशात् मूर्खात् इक्षुदण्डप्राप्तिः स्वाभिलषितप्राप्तिरित्यर्थः, न स्यादेवेति । न्यासः.

**स्वप्ने नृप इति न्यायः** । अयं 'यथा स्वप्ने नृपो भूत्वा भुक्त्वा भोगान् यथेप्सितान् । चतुरङ्गबलोपेतः शत्रून् जित्वा रणाङ्गणे ॥ परात्पराजितो भूत्वा वनं प्राप्य तपश्चरन् । मुहूर्तमात्रमात्मानं मन्यते कल्पजीवितम् ॥ तथैव

जाग्रत्कालेऽपि मनोराज्यं करोत्यसौ। कालनद्योघवेगेन क्षीणमायुर्न पश्यति ॥' इति। साहस्री. ६०७.

**स्वप्नव्याघ्रन्यायः।** यथा—स्वप्ने दृष्टो व्याघ्रः स्वप्ने विलाप्य तत्र वर्त-मानेन बाध्यरूपेण स्वयमपि विलीयते, एवं प्रकृतेऽपि। साहस्री. २७२.

**स्वभावो दुरतिक्रमः इति न्यायः।** स्पष्टः। साहस्री. २७३.

**स्वभावो मूर्ध्नि वर्तते इति न्यायः।** स्पष्टः। ७४१.

**स्वभावसिद्धन्यायः।** अयम् 'स्थानेन्तरतमः' (पा० १।१।५०)। इति सूत्रमहाभाष्ये ध्वनितः—"तद्यथा—समाजेषु समासेषु समावायेषु चास्य-ताम्' इत्युक्ते, नैव कृशाः कृशैः सहासते, न पाण्डवः पाण्डुभिः, येषामेव किञ्चिदर्थकृतमान्तर्यं तैरेव सहासते। उक्तं चान्यत्रापि—'घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम्। दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं, न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥' इति। साहस्री. ४४१.

**स्वयमशक्तः कथं परान् साधयिष्यतीति न्यायः।** यथा—चाक्षुषदर्शना-भावमितस्य राहोः केतोर्वा शुभाशुभफलदातृत्वसामर्थ्यं नास्तीति केषांचित् ज्योतिर्विदां मतम्। साहस्री. ३५४.

**स्वयं तीर्णः परांस्तारयतीति न्यायः।** यथा जलतरणविद्याकुशलः स्वयं तीर्णः परानपि तारयितुं शक्नोतीति, तथा सुगुरुः शिक्षानुशिष्टः स्वशिष्यान् शिक्षयतीति भावः। साहस्री. ५४४.

**स्वस्थे चित्ते वृत्तयः संस्फुरन्तीति न्यायः।** 'चिन्ताऽऽक्रान्तं धातुबद्धं शरीरं नष्टे चित्ते धातवो यान्ति नाशम्। तस्माच्चित्तं सर्वतो रक्षणीयं स्वस्थे चित्ते वृत्तयः संस्फुरन्ति ॥' साहस्री. ६३६.

**हंसकाकन्यायः।** अयं श्लोकोपनिबद्धः। तथाहि—'इभतुरगशतैः प्रयान्ति मूढा गुणवन्तो विबुधाश्चलन्ति पद्भ्याम्। गिरिशिखरगताऽपि काकपङ्क्तिः पुलिनगतैर्न समेति राजहंसैः ॥' इति। साहस्री. ६६१.

**हंसक्षीरोदकन्यायः।** हंसक्षीरन्यायार्थक एवायम्। 'अनुमानज्ञानं तावत् व्याप्तिपक्षधर्मतापरामर्शवशात् लिङ्गवशेन उपजायमानं हंसक्षीरोदकन्यायेन व्यापकविशेषविषयमेव उपजायते। तौता. १।३।११।३३.

**हंसबकन्यायः।** यत्राप्तोक्तसत्योत्कृष्टपदार्थे मूर्खजनोपहासस्तत्रायं प्रवर्तते

हिरण्यधारणन्यायः । हिरण्यधारणं पुरुषार्थः ।

हेरम्बनरसिंहन्यायः । यथा हेरम्बनरसिंहयोरेकदेशे गजत्वं सिंहत्वं वाऽपरस्मिन्नरत्वमिति देशभेदेन विरोधाभावात्तस्याऽर्हतस्यैकस्मिन्देश एव सत्त्वासत्त्वादिना अनेकान्तत्वाभिधाने दृष्टान्ताऽनुपपत्तेरिति रामानुजीया इति । साहस्री. ७०७.

ह्रदनक्रन्यायः । यथा ह्रदनक्रयोः परस्परवियुक्तयोः धीवरेण प्रधर्षणीयता भवति, संयुक्तयोस्तु परस्परसाहाय्यमाचरतोर्दुर्धर्षता भवति, तथा प्रकृतेऽपि । (अतः रक्ष्यरक्षकभावे अयं न्यायः) साहस्री. ३९२.

——ooo——